The Collection of Hindu Law Texts.

Vol. XXV.

THE

# S'UDDHI MAYÛKHA

(A TREATISE ON S'UDDHI)

*OR*

PURIFICATION

BY

BHAṬṬA NÎLAKANṬHA.

---

## PART I.

*(Sanskrit Text)*

EDITED BY

J. R. GHARPURE, B.A., LL.B.,

Pleader, High Court,

*Fellow of the University of Bombay.*

---

First Edition.

---



---

1921

धर्मशास्त्रग्रन्थमाला ( ग्रन्थाङ्कः २५ )

॥ श्रीः ॥

भट्टनीलकण्ठकृतभगवन्तभास्करे

# शुद्धिमयूखः

## ( एकादशः )

---

स च

जगन्नाथ रघुनाथ घारपुरे, बी., ए. एल्.एल्. बी.
हायकोर्ट वकील–मुंबई,

इत्यनेन संशोधितः प्रकाशितश्च ।

---

प्रथमावृत्तिः

---

शकाब्दाः १८४३ : क्रिस्ताब्दाः १९२१.

---

# उपोद्घातः ।

धर्मशास्त्रग्रन्थमालाया अयं पंचविंशो ग्रन्थः प्रकाश्यते । श्रुतिस्मृतिपुराणेतिहासादिनिबन्धा बहवः प्रमाणग्रन्थाः सन्ति । तत्र बहुषु व्यवहारनिबन्धेषु सत्सु भट्ट—नीलकंठस्य प्रबन्ध आर्यदेशस्य पश्चिमभूभागे विशेषतस्तत्र च श्रीपरशुरामक्षेत्रे गुर्जरदेशे त्वतीव प्रामाण्यतां गतः । राजशासनाधिकारिणोऽपि सामान्येन मिताक्षरामयूखावेव निर्णयेष्वाद्रियन्ते ।

तत्र भट्ट—नीलकण्ठास्थितिदेशकालबोधनाय श्रीकाशीक्षेत्रस्थाविद्वच्छिरोमणि—'रानडे उपनामकबालशास्त्री'—लिखितानुसारेण रावसाहेब विश्वनाथ नारायण मण्डलीकेस्तद्वंशो वर्णितः । स च तथैवात्र वर्ण्यते ।

"पुरा किल दक्षिणदेशे पैठणाख्यग्रामे गोविन्दभट्टो नाम महाविद्वांस्तपस्वी ब्राह्मणपुङ्गव आसीत् । तत्पुत्रो रामेश्वरभट्टनामा श्रीकाशीक्षेत्रं वासार्थं जगाम । तत्र च श्रीराममन्त्रेण सुचिरं भगवन्तं श्रीरामचन्द्रमुपासाञ्चक्रे । परिणतावस्थायां तस्य नारायणभट्टनामा पुत्रो बभूव । स बाल्यप्रभृति शान्त्यादिगुणसंपन्नो महातपस्वी चाभवत् । तदानीमेव यवनैः श्रीविश्वेश्वरप्रासाद उत्सादितः। ततश्च कियता कालेन सर्वस्मिन्भारतवर्षेऽनावृष्टिरजायत । तदा सार्वभौमयवनैर्भट्टनारायणो वृष्ट्यर्थं प्रार्थितः । ततो नारायणभट्टेनाहोरात्राभ्यन्तरे वृष्टिर्भविष्यतीति प्रतिज्ञातं तथैव सर्वपृथिव्यां देवो ववर्ष । तेन सर्वं जगन्ननन्द । सार्वभौमयवनेभ्यो नारायणभट्टेन श्रीविश्वेश्वरप्रासादनिर्माणानुमतिर्याचिता सापि तैर्दत्ता । तदा तेन महाप्रासादं निर्माय श्रीविश्वेश्वरः प्रतिष्ठापितः । ततस्य लोकोत्तरं ब्रह्मवर्चसमालोच्यास्तिकजना सर्वे परमभक्तिप्रेमगद्गदा बभूवुः सर्वैश्च जगद्गुरुरिति महापदवी दत्ता तत्कुलीनानां चाग्रपूजानियमो विहित इतीयं कथा श्रीकाशीक्षेत्रे सुप्रसिद्धा । नारायणभट्टस्य सर्वशास्त्रपारावारीणता त्रिस्थलीसेतुप्रयोगरत्नाद्यनेकग्रन्थनिर्मित्या जगत्प्रसिद्धा वर्तते । किंचाद्य यावत्तन्निर्मितग्रन्थैरेव श्रौतस्मार्तधर्मरक्षणं जातमित्यपि सुप्रसिद्धम् । वक्ष्यमाणवंशक्रमो नारायणभट्टपुत्ररामकृष्णभट्टकृतज्योतिष्टोमपद्धतिग्रन्थे स्पष्टं लिखितस्तस्येमौ श्लोकौ

> श्रीमद्दक्षिणदेशेऽस्य ह्यवासीत्स भट्टगोविन्दः ।
> तत्सूनुः श्रीरामेश्वरभट्टोऽभूत्स सर्वविख्यातः ॥ १ ॥
> तत्पुत्रः श्रीनारायणभट्टो जयति सूर्यवद्भूमौ ।
> तत्सूनू रामकृष्णभट्टो रामैकशरणतां यातः ॥ २ ॥

गोविन्दभट्टरामेश्वरभट्टाभ्यां निर्मिता ग्रन्थास्तज्जीवनसमयश्च साम्प्रतं यथार्थतया नोपलभ्यन्ते । नारायणभट्टस्थितिसमयस्तु साक्षात्तद्धस्तलिखितपुस्तकस्थेभ्योऽङ्केभ्योऽवगम्यते । तत्रैकस्मिन्पुस्तके विक्रमार्के संवत् १६२४ इत्यङ्का लिखिताः । पुस्तकान्तरे च

ऋषिबाणाब्धिभूगण्ये शाके ज्येष्ठे सिते रवौ ।
चतुर्दश्या विशाखासु ग्रन्थोऽन्त समगादयम् ॥
भट्टरामेशपुत्रेण काशीपुर्या यथामति ।
लिखितः सप्तमोऽध्यायो भाष्ये शबरसत्कृता ॥

इति श्लोकाभ्यामिमेऽङ्का ( १४५७ ) दर्शिता । तस्यैव पुस्तकस्य द्वादशाध्यायसमाप्तिपत्रे सवत् १६१२ इत्यङ्का लिखिताः । नारायणभट्टस्य रामकृष्णभट्टशङ्करभट्टशर्माणौ महानिबन्धकारौ सकलशास्त्रपारिणौ द्वौ पुत्रावास्ताम् । तत्र रामकृष्णभट्टकृतग्रन्थेषु महाग्रन्थस्तन्त्रवार्तिकव्याख्या । धर्मशास्त्रे तु जीवत्पितृकनिर्णयप्रभृतयो बहवो ग्रन्था सन्ति । शङ्करभट्टकृतग्रन्थेषु द्वैतनिर्णयाख्यो महाग्रन्थ' सुप्रसिद्ध । मीमासायामपि कानिचित्प्रकरणान्युपलभ्यन्ते । द्वैतनिर्णयारम्भश्लोकाभ्यामेतान्निर्णीयते । तौ श्लोकौ यथा

मीमासासरसीसरोजमकरन्दास्वादनैकव्रतो
हस स्वीययश सिताद्वयमतेरासीद्गुरूपामिष ।
वाग्देव्यागतमत्सरा श्रियमय नित्यानुरक्तो भजन्
नो मुक्तश्च निमुक्तक विजयते श्रीभट्टनारायण' ॥
विबुधानन्दसन्दोहहेतवे तत्तनूद्भव ।
मीमांसाद्वैतसाम्राज्यनीतिज्ञो भट्टशङ्कर' ॥

शङ्करभट्टस्य पुत्रौ द्वौ । नीलकण्ठभट्टो दामोदरभट्टश्च । तत्राद्यो महानिबन्धकारो दानमयूखादीना द्वादशानां मयूखाना कर्ता । द्वितीयश्च द्वैतनिर्णयपरिशिष्टकार इति द्वैतनिर्णयस्थदत्ताप्रदानिकप्रकरणादवगम्यते । नीलकण्ठपुत्र शङ्करभट्टस्तत्कृता व्रतार्कप्रभृतयो ग्रन्था द्वादशार्कान्तनामान उत्तमनिबन्धा' सन्ति । रामकृष्णभट्टस्य दिनकरभट्ट–कमलाकरभट्ट–लक्ष्मणभट्टाख्यास्त्रय पुत्रा बभूवुस्तत्र दिनकरभट्टेन कृता उद्योतशान्तिसारादिग्रन्था प्रसिद्धा । दिनकरभट्टस्यैव क्वचिद्ग्रन्थे दिवाकरभट्ट इति नाम्ना आचार । दिनकरभट्टस्य पुत्रो विश्वेश्वरभट्टस्तस्यैव गागाभट्ट इति नामान्तरम् । अनेन भाट्टचिन्तामणिप्रभृतयो बहवो ग्रन्था कृता । कमलाकरभट्टस्य निर्णयसिन्धुप्रभृतयो ग्रन्था बहुतरमेव प्रसिद्धा मान्याश्च सन्ति । तस्य च स्थितिसमयो निर्णयसिन्धुग्रन्थस्यान्तिमश्लोकेन स्पष्टीभवति । स यथा

वसुऋतुऋतुभूमिते ( १६६८ ) गतेऽब्दे नरपतिविक्रमतोऽथ याति रौद्रे ।
तपसि शिवतिथौ समापितोऽय रघुपतिपादसरोरुहेऽर्पितश्च ॥ इति

कमलाकरस्य पुत्रोऽनन्तभट्टस्तेन श्रीरामकल्पद्रुमप्रभृतय पद्धतिग्रन्था बहव कृता । लक्ष्मणभट्टनिर्मिता अप्याचाररत्नप्रभृतयो ग्रन्था प्रसिद्धा सन्ति । एवमन्येऽप्यस्मिन्कुले महामहाविद्वास स्तपस्विन सत्पुरुषा उत्पन्नास्तेषामपि कीर्तिर्दिगन्तेषु विख्याताऽस्ति । तेषा प्रदर्शनायाय वंशवृक्षो लिखितस्तत्र ये साम्प्रत वर्तन्ते तेषा नामसु प्रथम श्रीशब्द प्रयुक्त ॥ ”


गोविन्दभट्ट
रामेश्वरभट्ट
नारायणभट्ट
रामकृष्ण
शङ्कर
नीलकण्ठ
दामोदर
दिनकर
कमलाकर
लक्ष्मण
शङ्कर
रामभट्ट
दामोदर
रामकृष्ण
सखाराम
श्रीरामेश्वर
विश्वेश्वर
अनन्त
प्रभाकर
श्यामभट्ट
गोविन्द
जगन्नाथ
वासुदेव
लालभट्ट
रघुनाथ
दिवाकर
अनन्तराम
नारायण
रामेश्वर
हरभट्ट
बालभट
राजाराम
प्रभाकर
वैजनाथ
जगन्नाथ
विश्वनाथ
विश्वेश्वर
राम
हरभट्ट
गोपाल
गोविन्द
लक्ष्मण
रामकृष्ण
नारायण
श्रीलक्ष्मण
जयराम
श्रीबाबाभट्ट
श्रीरामेश्वर
श्रीवैजनाथ
श्रीपुरुषोत्तम
श्रीगोपाल
श्रीछोटाभट्ट
श्रीनारायण
श्रीगोविन्द
श्रीगोपाल
श्रीवीरेश्वर
दिनकर
कमलाकर
श्रीसखाराम
आत्माराम
वेणीराम
श्रीगङ्गाराम
श्रीअनन्त
श्रीसीताराम
श्रीहरिराम
श्रीबालभट
श्रीकान्तानाथ
श्रीकृष्ण
श्रीराम
१ गागाभट्ट

अत्र यानि पुस्तकानि यैश्च सुमनस्कतया प्रेषितानि तेषां नामादीनि संज्ञाश्च प्रकाश्यन्त तद्यथा—

| | | | | | | |
|---|---|---|---|---|---|---|
| अ—टेक्कनकालेजसंग्रहात्प्राप्तम् | | | ६० | अनुक्रमांकेन चिह्नितम् । | | |
| ख— | ,, | ,, | ३३९ | ,, | ,, | |
| क— | ,, | ,, | २४७ | ,, | ,, | |
| घ— | ,, | ,, | १२५ | ,, | ,, | |
| द— | ,, | ,, | १२६ | ,, | ,, | |
| ध— | ,, | ,, | १२७ | ,, | ,, | |
| न— | ,, | ,, | २९३ | ,, | ,, | अपूर्ण. |
| प— | ,, | ,, | २९४ | ,, | ,, | ,, |

झ—काश्यां शिलायां मुद्रित ।

ट—सरदार मेहेंदळे इत्येतैः पुण्यपत्तनात्प्रेषितम्.

इ—आनन्दाश्रमात्प्राप्तम्

फ—फर्ग्युसनकालेजात्प्राप्तम्

य—श्रीमत्विंचूलकरैः प्रेषितम्

ख—बंगदेशीयरॉयलएशिआटिकसोसायटीसंग्रहात्प्राप्तम्

परमुपकृतं नो यैरिमानि पुस्तकानि प्रेषितानि

जगन्नाथ रघुनाथ घारपुरे.

# शुद्धिमयूखः ।



## विषयानुक्रमणिका.



# अथ शुद्धिमयूखः प्रारभ्यते ।

## ( एकादशः )

### श्रीगणेशायनमः ॥

यो लीलया सततुतेऽत्र विश्वं तत्पालयत्यात्मनि विश्वरूपे ।
लये नयत्याशु च पूर्णरूपः शिवं तनोत्वाशु रविर्ममासौ ॥ १ ॥ ५
श्रुती स्मृतीर्वीक्ष्य पुराणजातं तत्तन्निबन्धानपि सन्निबन्धान् ।
श्रीशंकरस्यात्मजनीलकण्ठो द्रव्यादिशुद्धिं विवृणोति सर्वाम् ॥ २ ॥
प्रतारकैराहृतमत्र किंचिन्मया तु निर्मूलतया तदुज्झितम् ।
ऊनोक्तितातो न हि तेन काचित्सपुष्पहीनापचितिर्न हीयते ॥ ३ ॥
भगवत्भास्कराख्ये ग्रन्थेऽस्मिन् शिष्टसम्मते च तत । १०
शुद्धिविधानमयूखः प्रतन्यते नीलकंठेन ॥ ४ ॥

## अथ द्रव्यशुद्धिः

" सुवर्णरूप्यशंखाश्मशुक्तिरत्नमयानि च । कांस्यायस्ताम्ररैत्यानि त्रपुसीसमयानि च ॥
"निर्लेपानि च शुद्ध्यन्ति केवलेन जलेन च । शूद्रोच्छिष्टानि शोध्यानि त्रिधा क्षाराम्लवारिभिरिति ॥"
शंखः " कृष्णशकुनिमुखावमृष्टं निर्लिखेत् । श्वापदमुखावमृष्टपात्रं न प्रयुञ्जीतेति "। १५
निर्लेखस्तक्षणं । आपस्तम्बः (अ० ८।१०)
"गवाघ्रातानि कांस्यानि शूद्रोच्छिष्टानि यानि च । शुद्ध्यन्ति दशभिः क्षारैः श्वकाकोपहतानि च "॥
क्षारो भस्म । एतच्च स्वल्पोपहतिविषयं । अधिके तु स्मृत्यन्तरे (अंगिरा १।५६ आपस्तंब ८।१)
" भस्मना शुद्ध्यते कांस्यं सुरया यन्न लिप्यते । सुरामूत्रपुरीषैस्तु शुद्ध्यते तापलेखनैः ॥
"आमिषेण तु यल्लिप्तं पुनर्दाहेन शुद्ध्यति" ॥ बौधायनः ( ध सू १।६।३५–३७ ) २०
"तैजसानां मूत्राद्युपघाते पुनः करणं गोमूत्रे वा सप्तरात्रं परिवासनं ।पुनः करणाशक्तौ गोमूत्रे वासनं "।
अंगिराः ( अ० १ श्लो ५८।५९ )
" गण्डूषं पादशौचं च यः कुर्यात्कांस्यभाजने । षण्मासं भुवि निक्षिप्य पुनराकारमादिशेत्"॥
पुनराकारः पुनः करणं । मृद्दारुदानामत्योपहतौ " पुनः पाकान्महीमयमिति " याज्ञवल्क्येन
शुद्धिरुक्ता ( आ १८७ ) । तथा २५
" लोहानां दहनाच्छुद्धिर्भस्मना गोमयेन वा । दहनात्खननाद्वापि शैलानामम्भसाऽपि वा ॥
" काष्ठानां तक्षणाच्छुद्धिर्मृद्गोमयजलैरपि" । यदि तैर्न शुद्ध्येत्तदा तावन्मात्रछेदनं दाहो वा ।"

* स्मृत्यंतरे

१ क–ॐ । २ क–ऊनोक्तिता, द–ऊनोक्तिना ख गो । ३ फ–पुस्तके एव । ४ फट–आदित्यपुराणे अट्टप–याज्ञवल्क्य । ५ द–रैत्यानि । ६ फ–णि । ७ दम–ध्यते ।

" वस्त्रधान्यादिराशीनामेकदेशस्य दूषणे। तावन्मात्रं समुद्धृत्य शेषं प्रोक्षणमर्हति "॥ असमुद्धृतं तु प्रोक्षणाच्छुद्ध्यतीति भावः। याज्ञवल्क्यः ( आ० १८६–१८७ )
" सोषैरुदकगोमूत्रैः शुद्ध्यत्याविककौशिकं। सश्रीफलैरंशुपट्टं सारिष्टैः कुतपं तथा॥
" सगौरसर्षपैः क्षौममिति "। अत्यूर्णामयमाविकं। कोशसंभवं तसरीपट्टादिकौशिकं।
५ वल्कलतंतुनिर्मितमंशुपट्टं। श्रीफलं बिल्वफलं। पर्वतीयछागलोमनिर्मितं कुतपः। अरिष्टं फेनिलफल। अतसीसूत्रनिर्मितं क्षौमं।
एतच्चाधिकोपघाते। किंचिदुपघाते तु प्रोक्षणमेव। क्षालनासहतूलिकादिविषये **मिताक्षरायां** विशेषः ( पृ. ५३ पं. १८–१९ )
" तूलिकामुपधानं च पुष्परक्ताम्बरं तथा। शोषयित्वाऽऽतपे किंचित्करैः संमार्जयेन्मुहुः॥
१० " पश्चाच्च वारिणा प्रोक्ष्य विनियुंजीत कर्मणि "। अतिमालिन्ये परिशोधयेदपि। " अहतानां प्रोक्षणमिति " स्मरणार्थंत्रमुक्तनूतनवाससो प्रोक्षणाच्छुद्धिः। " शुष्कवासाः स्थले कुर्यात्तर्पणाचमनं जपमिति "। अस्यापवादः **शुद्धिविवेके** " सप्तवाताहतं वस्त्रं शुष्क-वत्प्रतिपादयेदिति "। शंखः
"सूतिकोच्छिष्टभांडस्य सुरामद्यहतस्य च। त्रिःसंप्रमार्जनाच्छुद्धिर्न तु कांस्यस्य तापनं॥
१५ कांस्यातिरिक्ततैजसानां मलोपघाते मार्जनं तापनं च। प्रतिमार्जनमुदकक्षालनमावर्त्तत। कांस्ये तथा न। अपि त क्षालन मार्जनं चेत्यर्थः।
अल्पधान्यादिविषये बौधायनः
" व्रीहयः प्रोक्षणाद्भिः शाकमूलफलानि च। तन्मात्रस्यापहाराद्वा निस्तुषीकरणेन वा॥ " अनेकपुरुषोद्धार्यविषये पर्यग्निकरणं प्रोक्षणं वा कश्यपोक्तं। विष्णुः
२० " मृत्पर्णतृणकाष्ठानां श्वभिश्चंडालवायसैः। स्पर्शेन विहितं शौचं सोमसूर्यांशुमारुतैः "॥ तथा " प्रोक्षणेन तु पुस्तकमिति " क्वचित्। सिद्धान्ते मनुः ( अ. ५ श्लो. १२४ )
" पक्षिजग्धं गवाघ्रातं अवधूतमवक्षुतं। दूषितं केशकीटैश्च मृत्प्रक्षेपेण शुद्ध्यति॥ " अवधूतं यस्योपरि वासोऽवधूतं। याज्ञवल्क्यः ( आ. १८९ ) " सलिलं भस्म मृद्वाऽपि प्रक्षेप्तव्यं विशुद्धये "। यत्तु गौतमः ( अ. १७ सू ८।९ ) " नित्यमभोज्यं केशकीटाव-
२५ पन्नमिति " तत्सहपक्वाभिप्रायं। वसिष्ठः
" देवद्रोण्यां विवाहेषु यज्ञेषु प्रकृतेषु च। काकैः श्वभिश्च संस्पृष्टमन्नं तन्न विवर्जयेत्॥ "इति। "तन्मात्रमन्नमुद्धृत्य शेषं संस्कारमर्हति" इति निर्णयामृत। देवद्रोणी यात्रा। पराशरः
" पक्वं द्रोणाधिकं त्वन्नं काकश्वाद्युपघातितं। ग्रासमुद्धृत्य तन्मात्रं यच्च लालाकृतं भवेत्॥
" होमोदकेन चाभ्युक्षेदाजतेनोद्धुनाऽथ वा। अग्निज्वालोपसंस्पर्शात्सुवर्णमधुसर्पिषा॥
३० " विप्राणां ब्रह्मघोषेण पूतं भोज्यं च तद्भवेत्॥ " तथा
" अत्रमेकाढकं पक्वं श्वकाकाद्युपघातितं। केशकीटावपन्नं च तैदप्येवं विशुध्यति॥
' कोतस्य पि विशिष्टष्ट एष एव मनीषिभिः। " इदमन्नग्रविषयं ज्ञेयं। द्रवविषये शंखः।

१ कद्‌–सो। २ कफ–फेनक। ३ दृ–संमार्जना। ४ ३ मन्त्रेशवात। ५ह्म–आवर्नकान्ते। तापनं कार्यं। ६ इघ–तापने। ७ अदृघट–शुद्धिः। ८ ठ–पुस्तक एव। ९ घअक–देमोदकेन। १० वृ–पर्यं। ११ ल–द्रव्यद्रय।

" श्रपण घृततैलाना प्लावन गोरसस्य च । माडानि क्षालयेदद्भि शाकमूलफलानि च ॥"
चकारादघृततैलयोरपि । प्लावन वस्रातरिते पात्रे प्रक्षेप । तदुक्तपात्रस्य तज्जातीयद्रव्येण तथा
परण यथा द्रव्य बहिर्निस्सरति तत्प्लावनमिति केचित् । तथा " आधारदोषे तु नयेत्पात्रात्पात्रातर
द्रव "। तथा बौधायन ( ध सू १।५।४७ )
" देश काल तथाऽऽत्मान द्रव्य द्रव्यप्रयोजन । उपपत्तिमवस्था च ज्ञात्वा शौच प्रकल्पयेत् ॥" ५
याज्ञवल्क्य ( आ १९१ ) " वाक्शस्तमम्बुनिर्णिक्त अज्ञात च सदा शुचीति "॥
अज्ञात स्पर्शविषयकसंशयनिश्चयसाधारणज्ञानाभाववत् " । धर्मकोशाना कषायद्रव्येण शोधन-
मिति केचित् । मनु ( अ ५ श्लो. १३० ) " श्वभिर्हतस्य यन्मास शुचि तन्मनुरब्रवीदिति"॥
श्वभिर्मृगयाया । तदपि मक्ष्यस्य । तथा ( ५–१२९ )
" नित्यमास्य शुचि स्त्रीणा शकुनि फलपातने। प्रस्रवे च शुचिर्वत्स श्वा मृगग्रहणे शुचिरिति॥ " १०
तथा ( ५।१२८ )
" नित्य शुद्ध कारुहस्त पण्य यच्च प्रसारित । ब्रह्मचारिगत भैक्ष्य नित्य मेध्यमिति स्मृत ॥ "
कारुहस्तस्तत्कर्मणि । भैक्ष्यमनाचातस्त्र्यादिदत्त न तु चाडालादिस्पर्शे । तथा
" शुचिरग्निरजो वायुरापो दधि घृत पय । सर्वाण्येतानि मेध्यानि स्पर्शे छाया च नित्यश ॥ "
छाया चाडालादेरन्या । तथा ब्रह्मपुराणे ' चाडालपतितछायास्पर्शे दृष्ट्वा तनुर्भवेदिति ॥ " १५
रजोऽपि रासभादेरन्यत् । तथाऽऽह शातातप
" रेणव शुचय सर्वे वायुना ये समीरिताः । अन्यत्र रासभाजाविश्वशूकरविमार्जनी ॥"
अते पचम्या अमावश्याद्र्दैसः । तथा
" पादौ शुची ब्राह्मणस्य अजाश्वाना मुख शुचि । गवा पृष्ठानि मेध्यानि सर्वगात्राणि योषिताम्॥"
भूशुद्धिमाह याज्ञवल्क्य ( आ. १८८ ) २
" भूशुद्धिर्मार्जनाद्दाहात्कालाद्गोक्रमणादपि । सेकादुल्लेखनाल्लेपाद्गृह मार्जनलेपनात् ॥ "
देवल
" अद्भुग सतता धारा वातोद्धताश्च रेणव । स्त्रियो वृद्धाश्च बाल श्च न दुष्यति कदाचन॥
" दधि सर्पि पय क्षौद्रभाडे दोषो न विद्यते । मार्जारश्चैव दर्वी च मारुतश्च सदा शुचि ॥"
मार्जार शुचि कर्मकालादन्यत्र । तत्र तु स्पर्शे स्नान । तथा २५
" आत्मशय्यासन वस्त्र जायापत्य कमडलु । शुचीन्यात्मनि एतानि परेषामशुचीनि हि।"
तथा
" उपस्पृश्याशुचिस्पृष्ट तृतीय चापि मानव । हस्तौ पादौ च तोयेन प्रक्षाल्याचम्य शुद्ध्यति॥"
प्रथमोऽशुचिस्तत्स्पृग् द्वितीय । तत्स्पृष्टस्तृतीय । तत्स्पर्शे आचमनमात्र चतुर्थादौ मानाभावात् ।
हरिहरभाष्ये वृद्धशातातप ३०
" शिशोरभ्युक्षण कार्य बालस्याचमन स्मृत। रजस्वलादिसस्पर्शे स्न त्तपच कुमारके "॥
बाल दिस्वरूप च तत्रैवोक्त

---

१ ग्र–य । २ ल क भाण्ड । ३ द्व–स्त्यादिद त । ४ ख–न्त ल । ५ ल्य मु ७।१।३९ । ६ द्व मनता
७ ल–शुचयात्मनि नयन्न शुचयात्मनि । ८ द्व–न इ ।

" प्राक्चूडाकरणाद्बाल प्रागन्नप्राशनाच्छिशु । कुमारस्तु स विज्ञेयो यावन्मौञ्जीनिबन्धनमिति ॥"
नदीशुद्धिमाह गार्ग्य

"अकार्यकारिणा दान वेगो नद्याश्च शुद्धिकृत् । शोध्यस्य मृच्च तोय च सन्यासो वै द्विजन्मनामिति" ॥
सर्वापवाद मरीचिराह

५ " येषु स्थानेषु यच्छौच धर्माचारश्च तादृश । तत्र तत्पावन मन्ये धर्मस्तत्रैव तादृशः ॥
" येषु देशेषु ये देवा येषु देशेषु ये द्विजा । येषु स्थानेषु यत्तोय या च यत्रैव मृत्तिका" ॥
तत्पावनमिति शेषं । पराशरोऽपि ( अ० १ आ० का० श्लो० ३१ )
"युगे तीर्थे च ये धर्मास्तत्र तत्र च ये द्विजा । तेषां निंदा न कर्तव्या युगरूपा हि त स्मृता " ॥
तथा । "यद्यपि स्यात्स्वय ब्रह्मा त्रैलोक्याकर्षणक्षम ॥ तथापि लौकिकाचार मनसाऽपि न लघयेत्" ॥

## १० अथ गर्भस्रावाद्याशौचम्

तत्र पराशर ( अ० ३ आ० का० श्लो० १५ । १६ )

" आ चतुर्थाद्भवेत्स्राव पात पचमषष्ठयो । अत ऊर्ध्व प्रसूति स्याद्दशाह सूतक भवेदिति ॥"
स्रावाशौचमाह मरीचि

" गर्भस्रुत्या यथामासमचिरे तूत्तम त्रय । राजन्ये तु चतूरात्र वैश्ये पचाहमेव [illegible] ॥
१५ " अष्टाहेन तु शूद्रस्य शुद्धिरेषा प्रकीर्त्तितेति "। अचिरे आद्यमासत्रेय । उत्तमे ब्राह्मणे ।
इद च प्रसूताया एव । न सपिण्डाना । तथा " चतुर्थे मातुरेव चत्वारीति " विज्ञानेश्वर-
माधवादय । एव मातु पचमे पच षष्ठे षट । सपिण्डानामपि पचमषष्ठयास्त्र्यह । " पाते
मातुर्यथामास सपिण्डानां दिनत्रयम् " इति मारीचात् ।

अत्राशौचप्रकरणे रात्रिपद दिनपद चाहोरात्रलक्षक ज्ञेय । एवमन्यत्रापि । एतच्च गर्भनाश-
२० प्रयुक्ताशौच सर्ववर्णेषु सम मरीचिवचन तु विगीतत्वान्नादरणीय । न हि वैश्यशूद्रयोस्त्रिषु
मासेषु क्रमेण पचाष्टदिनानि चतुर्थमासे तु माससमसख्यानि चत्वारि दिनानीति युज्यते इति ।
अष्टममासादिषु स्रावजात्युक्त सपूर्णमेव प्रसवाशौच कार्य इति द्रष्टव्य । स्वपत्न्या व्यभिचाराद्धृत-
गर्भस्य प्रसवेऽपि जनकक्षेत्रिणोरुभयोरप्येकाह । तथा चैकाहानुवृत्तौ याज्ञवल्क्य ( प्रा० २५ )
" अनौरसेषु पुत्रेषु भार्यास्वन्यगतासु चेति ॥ " मातुस्तु तत्राप्युक्तैव व्यवस्था विशेषानुक्त ।
२५ स्वभार्यास्वन्य प्रतिलोमव्यतिरिक्तमाश्रितासु प्रसूतासु मृतासु चाहोरात्रमाशौच । सपिडाना तु
स्नानमात्रमिति मिताक्षरायां । इति गर्भस्रावाद्याशौच ।

सप्तममासप्रभृतिसूतिविषये हारीत । " जातमृते मृतजाते वा सपिंडानां दशाहमा-
शौचमिति " । जननात्परं नालछेदो त्परमेव शिशुमरणे सपिंडाना दशाह जन्माशौच । पूर्व मरण
तु त्र्यहो वक्ष्यते । दशाहमिति तत्तद्वर्णाशौचोपलक्षण । मनुरपि

३० " दशाहाभ्यतरे बाले प्रमीते तस्य बान्धवै । शावाशौच न कर्तव्य सूत्याशौच विधीयते ॥"
यच्च " जात मृत जाते वा कलस्य सद्यशौचमिति " स्मृत्यतर तच्छिशुमरणनिमित्ताशौचा-

---

१ ब्र-ध-फ भाधस्य । २ ई-द-फ-घ-अ थथ ३ अ-द-छ-घ-फ-ई द्विना ।
४ क-य । ५ छ पाद । ६ द रात्र । ७ छ पाठ । ८ ब्र-छ-द-अ-फ [illegible] सप्तम । ९ नल्य-पुत्रमण ।

मावपर । मरणाशौचनिमित्त स्नानमात्रमस्त्येवेति प्रथकृत । नाभिछेदात्प्राङ्मरणे मातु सपूर्ण सूतक सपिंडाना तु जन्मनिमित्त त्रिरात्र । तथा च मनु

" जीवञ्जातो[१] यदि ततो मृतसूतक एव तु । सूतक सकल मातु पित्रादीना त्रिरात्रक ॥"

ततस्तदनतरमेव । नाभिवर्द्धनाद्र्वागिति यावत् । यत्तु जैमिनि

"यावन्न छिद्यते नाल तावन्नाप्नोति सूतक । छिन्ने नाले तत पश्चात्सूतक तु विधीयते ॥" ५

इति तन्नालछेदोत्तर शिशुमरणे सपिण्डाना दशाहजन्माशौचपरमिति केचित् । शिशुजन्मनिमित्तकर्मााद्यधिकारेऽनधिकारित्वप्रतिपादनपरमिति तु युक्त । अन्यथोत्तरार्धे मृतपदाध्याहारापत्तेरिति ।

" जननिमित्तमस्पृश्यत्व मातुर्दशाह । पितुस्तु सचेलस्नानादस्पृश्यत्व गच्छती " त्याह सवर्त्त[२] ।

"पुत्रे जाते पिता सद्य सचेल स्नानमाचरेत् । स्पर्शयोग्यस्तत पश्चादित्याह भगवान मनुरिति ॥"

पुत्रे इति पुस्त्वमविवक्षितमनुवाद्यगतत्वात् तेन कन्योत्पत्तेऽपि पितु स्नानमावश्यक । सपिंडानाम- १०
स्पृश्यत्व नास्त्येव । अतो न तेषा स्नानमपि । यदाहाङ्गिरा "सूतके सूतिकावर्जसस्पर्शो न निषिध्यते " इति । वैधकार्ये तु पैठीनसि " सूतिका पुत्रवती विंशतिरात्रेण कर्म कारयेन्मासेन स्त्रीजननीमिति" दशाहपर्यंतमाशौचेनैव कर्मानधिकारप्राप्तेर्जन्मप्रभृति गणनायां विंशतिरात्रमासपदयो प्राप्तदशाहाद्यनुवादाप्राप्तावशिष्टदिनांश विधिरिति विध्यनुवादवैरूप्यापत्ते र्मासाशौचवत् शूद्र मत्यानर्थक्यप्रसगाच्च । अस्य यावदाशौच प्राप्त तदुत्तरमेव विंशतिरात्र १५
मास च कर्मानधिकार इति कश्चित् । तत्तुच्छ । यत्र हि एकेनैव पदेन स्वार्थ एक पदार्थ प्रत्युद्दिश्यतेऽन्य च प्रत्युपादीयते तत्र वैरूप्य । यथा " वाजपेयेन स्वाराज्यकामो यजेतेति " यजिपदे [illegible] तु दशाशौचोत्तरदिनेष्वैधिकानाधिकारमात्रबोधनाच्च तत् । अन्यथा द्वादशाहीनस्येत्यत्रापि प्रकृतितस्ति सुणामुपसदा प्राप्तस्तद्दशेऽनुवादोऽधिकाश विधिरिति वैरूप्य स्यात् । अतो जन्मप्रभृत्येव विंशतिरात्र मास च यावदप्राप्ताह कर्मानधिकारो बोध्यते इति । तातचरणास्तु प्राप्तदशम- २०
दिनादिकर्मानधिकारावधिविधिनावध्यतरमवेद बोध्यते । " दीक्षितो न ददाति न जुहोतीति-
होमानधिकारावधिभूतदीक्षोन्मोचकावभृथोत्तरवैधेनैतया पुनराधेयमितियेष्टयाऽग्निर्न जुहोती त्युदवसानीयरूपावध्यतरवदिति युक्तमुत्पश्यति । प्रथमषष्ठदशमदिवसेषु दानसूतिकागृहदेवता पूजनमात्रार्थ नाशौच । यदाह व्यास

"प्रथमे दिवसे षष्ठे दशमे चैव सर्वदा । त्रिष्वेतेषु न कुर्वीत सूतक पुत्रजन्मनि " ॥ २५

स्मृत्यतरेऽपि

' तत्र सर्व प्रतिग्राह्य कृतान्न तु न भक्षयत् । भक्षयित्वा तु तन्मोहाद्द्विजश्चान्द्रायण चरेत् ॥"

इति जन्माशौचम् ॥

## अथानुपनीताशौच ।

तत्र नामकरणप्राङ्मृतौ शख " प्राङ्नामकरणात्सद्य शुद्धिरिति " । नामकरणादिति ३०
स्वकालोपलक्षण दतजननादिवित् । नामकरणकालस्तु एकादशेऽहनि त्रयोदशे षोडशे एकत्रिंशे इति क्रमाच्चतुर्वर्णेषु । स्वरूपत एव नामकर्म मध्य शुद्ध्यवधिरिति केचित् । नामकरणानतरमम्युदकदान वैकल्पिक । तथा च मनु ( अ ५ श्लो ६९ )

---

१ क–मृतो । २ ब–प । ३ द–र–ध–न पत्नविरार । ४ ङ–नियतर– । ५ ङ–ङ योत्तरवाधैनैव ।
६ द नामकरणा ।

" नात्रिवर्षस्य कर्तव्या बान्धवैरुदकक्रिया । जानदतस्य वा कुर्यान्नाम्नि वाऽपि कृते सति॥"

उदकमग्रस्युपलक्षण । नात्रिवर्षस्येत्युक्ते । चूडोत्कर्षेऽपि वर्षत्रयादूर्ध्वमग्न्युदकदानादि नियत ।

' चूडाकर्म द्विजातीनां सर्वेषामेव धर्मत । प्रथमे वा तृतीये वा कर्तव्य श्रुतिनोदनादिति॥ "

आद्यवर्षीयचूडाकर्मानतरमप्यग्न्युदकदान नियत । तदुक्त

५ " तूष्णीमेवोदक कुर्यात्तूष्णीं संस्कारमेव च । सर्वेषा कृतचूडानामन्यत्रापीच्छया द्वय॥ "

अन्यत्र नामकरणादूर्ध्वं इच्छयाऽग्न्युदकदान निखनन वा । तथा च याज्ञवल्क्य ( प्रा १ )

" ऊनद्विवर्ष निखनेन्न कुर्यादुदक तत । आश्मशानमनुव्रज्य इतरो ज्ञातिभिर्मृत ॥ "

इतरो वर्ष । ऊनद्विवर्षस्य निखननमेवेत्याचार । मनुरप्यूनद्विवर्षमधिकृत्य " अरण्ये काष्ठवत्यक्त्वा क्षिपेयुस्त्र्यहमेव त्विति । ' ।नामकरणात्प्राक् सर्वेषा सद्य शौच नामकरणादूर्ध्वं दतजननकाला

१० त्सप्तममासलक्षणात् अग्निसंस्कार एकाह । असस्कारे सद्य शुद्धि । मातापित्रोस्तु नामकरणादूर्ध्वं उपनयनपर्यंत सर्वथा त्र्यह एव ।

"निरस्य तु पुमान् शुक्र उपस्पृश्य विशुध्यति । बैजिकादभिसबधादनुरुध्यादघ त्र्यहमिति॥"

कार्यकारणसबधे त्र्यहोक्त । ततो दतजननादूर्ध्वं प्रथमवार्षिकचूडाकर्मपर्यंत अहोरात्र प्रथमवर्षादूर्ध्वं त्रिवर्षपर्यंतमकृतचूडस्य कृतदन्तस्याप्येकाह । यस्त्वङ्गिरोवचन

१५ "यद्यप्यकृतचूडो वै जातदन्तस्तु सस्थित । दाहयित्वा तथाऽप्येनमाशौच त्र्यहमाचरेत् ' ॥ इति तत्कुलधर्मानुरोधेन वर्षत्रयादूर्ध्वं चूडोत्कर्षे ज्ञेय । "विप्रे न्यूनत्रिवर्षे तु मृते शुद्धिस्तु नैशिकीति " तत्रैवोक्तत्वात् । कृतचूडस्य तु त्रीणि । वर्षत्रयादूर्ध्वं कुलधर्मानुरोधेनाकृतचूडस्यापि त्रीण्येव । उपनयनादूर्ध्वं दशरात्रादिक । अत्र सर्वत्र

" आदन्तजन्मन सद्य आचूडान्नैशिकी स्मृता । त्रिरात्रमाव्रतादेशाद्दशरात्रमत परम् " ॥

२० इत्यादीनि वचनानि मिताक्षरादौ अनुसधेयानि । अत्र दतजननपदेन दतजन्मकालापरलक्ष्यते । स च सप्तमो मास । दतजन्मसप्तमे मासीत्युपलक्षण । मिताक्षरादौ अनुदर्शनात् । चूडापदेनापि स्वकालो लक्ष्यते । स च तृतीय वर्ष " तृतीय वर्ष चौल यथाकुलधर्म ' वेत्याश्वलायनोक्ते ( १।१७।१ ) । यद्यपि " प्रथमे वा तृतीये वेति " प्रथमवर्षविधान तथापि " विप्रे न्यूनत्रिवर्षे तु मृते शुद्धिस्तु नैशिकीति " तृतीयवर्षपर्यंतमेकरात्रविधानात् तृतीयाब्दसमाप्तिदिनमेव लक्ष्यते ।

२५ व्रतमुपनयन । तेनापि स्वकाले षड्वर्षानन्तररूपो लक्ष्यत इति कद्धर । तत्र वचनमप्याह केचित् । अनुपनीतमुपक्रम्य

" म्रियते यत्र तत्र स्यादाशौच त्र्यहमेव हि। द्विजन्मनामय कालस्त्रयाणा तु षडाब्दिक ॥"

इति । मेधातिथिस्तु अष्टमैकादशद्वादशवर्षरूप क्रमेण त्रयाणा अष्टवर्षरूपा वा सर्वेषामि स्यात् । अत्र षडब्दपद मासत्रयाधिकषडब्दपर । तेन गर्भाष्टमाब्दसमवेन वयाप्यविरोध ।

३० विशेषमाह हारीत

---

१ ख पूर्णेपि । २ ल–दाने । ३ मनुस्मृ अ श्लो ३५ । ४ अ ५ श्लो ६८ । ५ मनुस्मृति अ ५ श्लो० ६१ । ६ ल पाठ । ७ याज्ञव० स्मृ० प्रा ३ । ८ ल हे लभ्यते ख–रोदन । ९ ल–नुपनिषद्गो त । १० ख–+ एव ।

"आ मौञ्जीबन्धनाद्विप्र क्षत्रियश्च धनुर्ग्रहात् । आ प्रतोदग्रहाद्वैश्य शूद्रो वस्त्रद्वयग्रहात्" । धनु प्रतोदावग्रमेऽब्दे । वस्त्रद्वयग्रहो द्वादशेऽब्दे । तेन शूद्रस्य मासाशौच द्वादशाब्दप्रभृति ॥ **अपरार्के तु**

"अनूढभार्य शूद्रस्तु षोडशाद्वत्सरात्पर । मृत्यु समधिगच्छेच्चेन्मासात्तस्यापि बान्धवा ॥ शुद्धिं समधिगच्छन्ति नात्र कार्या विचारणेति"। शङ्खेन विशेष उक्त ( १५।६।७) "अत्र च ५ देशाचाराद्व्यवस्था ज्ञेया। नान्येषु। कन्यापत्यमृतौ तु नामकरणादूर्ध्वं वर्षत्रयपर्यंत अकृतचूडाया सद्य शौच । " अचूडाया तु कन्याया सद्य शौच विधीयते" इत्यापस्तम्बोक्ते । ततो वाग्दान पर्यंतमहोरात्र प्रथमवर्षकृतचूडायामपि मृताया यावद्वाग्दानमहोरात्रमेव ।

"अविशेषेण वर्णानामर्वाक्सस्कारकर्मण । त्रिरात्रात्तु भवेच्छुद्धि कन्यास्वन्हा विधीयते"॥ इत्यङ्गिरोक्ते । पुविषयक्र्यहविषय एव कन्यास्वेकाह इति प्रथकृत । याज्ञवल्क्योऽपि १०

(प्रा० २४)॥"अहस्त्वदत्तकन्यासु बालेषु च विशोधनम् " । बालब्जातदतेष्वप्रिसस्कार इति विज्ञानेश्वर (पु० १८१ प० २६) । वाग्दानादूर्ध्वं विवाहसस्कारात्प्राक् पतिपक्षे पितृपक्षे च त्रीण्यहोरात्राणि ।

" स्त्रीणामसस्कृताना तु त्र्यहाच्छुध्यन्ति बान्धवा । यथोक्तेनैव कल्पेन शुध्यन्ति तु सनाभय "। इत्युक्ते । बान्धवा पतिसपिण्डा । सनाभय पितृसपिण्डा । एतद्वचनात् ऊर्ध्वं विवाहा- १५ त्प्राक् कन्याशौच त्रिपुरुषमेव । " अपरिणीताना स्त्रीणां त्रैपुरुष सापिण्ड्यमिति " स्मृत्यन्तरे । " अप्रत्ताना तु स्त्रीणा त्रिपुरुषी विज्ञायते " इति वासिष्ठात् ( अ ४ सू १८ ) । अत्र सर्वत्र मातापित्रो पुमपत्यवद्वाशौच विशेषाश्रवणात् इति केचित् । मदनरत्न निर्णयामृते च शङ्खस्तु विशेषमाह । "अजातदन्तासु पित्रोरेकरात्रमिति"। इद च नाद्रियते शिष्टै । विवाहानतर विष्णु " सस्कृतासु स्त्रीषु नाशौच पितृपक्षे तत्प्रसवमरणे चेत्पितृगृहे स्याता तदैकरात्र त्रिरात्र चेति "॥ २० प्रसवे एकरात्र मरणे त्रिरात्रमिति भेद । पितृगेहे इति विशेषणात्पतिगृहे प्रसवमरणयो प्रसवे सर्वेषामाशौच नास्त्येव मरणे पित्रोस्त्रिरात्रमस्त्येव ।

" वैजिकादभिसबन्धादनुरुध्यादघ त्र्यह । प्रत्ताप्रत्तासु योषित्सु सस्कृतासस्कृतासु वा ॥

" मातापित्रोस्त्रिरात्र स्यादितरेषा यथाविधी " त्यविशेषेण स्मरणात् । माधवस्तु

" दत्ता नारी पितुर्गेहे सूयताथ म्रियेत वा । तद्बन्धुवर्गस्त्वेकेन शुचिस्तज्जनकस्त्रिभिरिति " ॥ २५ ब्राह्मवचनात् । प्रसवे पित्रोस्त्रिरात्र भ्रात्रादिबन्धुवर्गस्यैकरात्रमित्याह । पित्रोर्मरणे विवाहितकन्याया-स्त्रीण्यहोरात्राणि ।

"पित्रोरुपरमे स्त्रीणा व्यूढाना तु कथ भवेत् । त्रिरात्रेण तु शुद्धि स्यादित्याह भगवान्यम "॥ इति वचनात् । अविवाहितायास्तु पुत्रादीनामिवाशौचमित्यादि ज्ञेय । एतदाशौच सर्व वर्णसाधारण वयोविशेषकृतत्वादिति । ३०

१ क त्रिपुरुषपर्यन्त इ-घ-फ सप्तपुरुषपर्यन्त य-च ग-ध-म पुरुषपर्यन्त २ प्रत्तानामिति वासिष्ठे पाठ ।

" तुल्ये वयसि सर्वेषामतिक्रान्ते तथैव च । उपनीते तु विषय तस्मिन्नेवातिक्राळजमिति॥ "
व्याघ्रपादोक्तेः । अनौरसेषु दत्तक्रीतक्षेत्रजादिपूत्पन्नेषु मृतेषु च न वा क्षेत्रिणो प्रतिलोमव्यति-
रिक्तमाश्रितासु पत्नीषु प्रसूतासु मृतासु च त्रिरात्रं । न तु सत्यपि सापिंड्ये दशाहादि ।
तथा च त्रिरात्रानुवृत्तौ विष्णुः ( २३।४२ )

५ " अनौरसेषु पुत्रेषु जातेषु च मृतेषु च । परपूर्वासु भार्यासु प्रसूतासु मृतासु च ॥ " इति ।
याज्ञवल्क्येन त्वेकाह उक्तः ( प्रा. २५ )

" अनौरसेषु पुत्रेषु भार्यास्वन्यगतासु चेति " । एते च त्रिरात्रैकरात्रे सन्निधिविदेशभेदेन व्यव-
स्थिते । अनौरसपदेन " अनौरसो धर्मपत्नीज " इति परिभाषितौरसभिन्ना गृह्यते । तेन
जनकस्य क्षेत्रजाद्दौ त्रिरात्रैकरात्रे सुस्थे । यद्वा पितुस्त्रिरात्र तद्वा सपिंडानामेकरात्र

१० " सूतके मृतके चैव त्रिरात्र परपूर्वयो । एकाहस्तु सपिंडाना त्रिरात्रं यत्र वै पितुरिति ॥ "
मारीचात् । पितृग्रहण पत्युपलक्षण । तथा च हारीत

' परपूर्वासु भार्यासु पुत्रेषु कृतकेषु च । भर्तृपित्रोस्त्रिरात्र स्यादेकाहस्तु सपिंडन " इति ॥
पितुरेकरात्रपक्षे सपिंडानां स्नानमात्र ।

' अन्याश्रितेषु दारेषु परपत्नीसुतेषु च । गोत्रिणः स्नानशुद्धाः स्युः त्रिरात्रेणैव तत्पितेति "॥

१५ प्रजापत्युक्ते । यद्यपि स्नानस्य पितुस्त्रिरात्रसमानविषयत्व प्रतीयते तथापि हारीतमरीचिभ्या
मविरोधाय पितुरेकरात्रविषय एव सपिंडाना स्नान कल्पनीय । यत्तु सत्य शौचानुवृत्तौ
शातः " अन्यपूर्वासु भार्यासु पुत्रेषु कृतकेषु चेति " । भार्यापुत्रशब्दयो सन्निधिशब्दत्वा-
दुपस्थितयोः पतिपित्रो सपिंडानामित्यध्याहारेण सपिंडविषय हीनवर्णभार्या अशास्त्रीयपुत्रविषय
वा व्याख्येयमिति " तस्माद्दत्तकमरणे त्रिरात्रमिति प्राच. । तातचरणास्तु । उपनीतदत्तक-

२० मरणे सापिंड्यात्प्रतिगृहीततत्सपिंडादयो दशाहमाचरतीति शिष्टाचार । उक्तवचसा व्यवस्था
चैव । विष्णुयाज्ञवल्क्योक्त त्रिरात्रैकरात्र तु प्रतिगृहीतृसन्निधिविदेशभेदेनानुपनीतदत्तकादिमरणे
" एकाहस्तु सपिंडानामिति " मारीच तु प्रतिगृहीतृसपिंडाना तु चूडाकरणकालानतरमरणे
" गोत्रिण स्नानशुद्धा. स्यु " प्राजापत्यं तु दत्तजननोत्तरमरणे ज्ञेयमिति प्राहु । अत्र दत्त-
कपुत्रमरणे जनकादेर्जनकादिमरणे च दत्तकस्य नाशौच मानाभावात् । यत्तु केचि " दैनिकाद-

२५ भिसबधाद्गुरु ध्याद्य त्र्यहमिति " वचनात्त्र्यहमिति तत्तुच्छ

" गोत्ररिक्थे जनयितुर्न भजेद्दत्रिम सुत । गोत्ररिक्थानुगः पिंडो व्यपैति ददत स्वधेति" ॥
( ९ । १४२ ) मनुवचने गोत्ररिक्थस्वधापदैर्जनकादीनां परस्परसंबधप्रयुक्त कार्य लक्ष्यते ।
"जातपुत्र कृष्णकेशोऽग्नीनादधीते " त्यत्रेव वयोऽवस्थाविशेष । तेन लक्षितकार्यमात्रनिवृत्त्या
आशौचस्यापि निवृत्तिसिद्धे । अन्यथा यावद्वचन वाचनिकमिति न्यायाद्दत्तकसोदरा-

३० दीनां परस्परसबधानिवृत्त्या श्राद्धाशौचरिक्थग्रहणादौ परस्परमधिकारापत्तेश्चेति दिक् ।

अथोपनीतसपिंडमरणाशौच । मनु ( अ ५ श्लो० ५९,६१ )

१ ल०-व्यवस्था । २ लत०-पुस्तकयोरेव । ३ ड्ढअ०-उपनीत मरणाशौच वघक्थयफनप—
मरणाशौच ।

"दशाहं शावमाशौचं सपिंडेषु विधीयते"। 'जननेऽप्येवमेव स्यान्निपुणां शुद्धिमिच्छता"॥ अत्र सपिंडेष्विति मृतविशेषणं । तेन मूलपुरुषमारभ्याष्टमादेर्जननमरणयोर्मूलपुरुषस्यापरसंतते द्वितीयादेरष्टमावधिकाया दशाहमेवाशौचं । द्वितीयादिमपि मूलपुरुषस्य सपिंडत्वेन तत्संतते सपिंडत्वात् । मूलपुरुषमारभ्य द्वितीयादेर्जननमरणयोरष्टमादेः सोदकत्वप्रयुक्तं त्रिरात्रं । अष्टमादि प्रति सोदकत्वेन तत्संततेरपि सोदकत्वात् । न ह्यनयोः स्वतः सापिंड्यं किंतु मूलपुरुषद्वारक- ५ मेव । तस्मात्सापिंड्यं प्रतियोगिभेदेन भिन्नं प्रत्येकपर्याप्तमेकतो निवृत्तमन्यतो न निवर्तत इति केषांचिदाचारानुसारी निष्कर्षः । वस्तुतस्तु

"दशाहेन सपिंडास्तु शुध्यंति प्रेतसूतके । दशाह एव विप्रस्य सपिंडमरणे सति"॥ इत्यादिवचनेन परस्परं सापिंडजननमरणयोरेव दशाहमनात । सप्रतियोगिकत्वेन एकतो निवृत्तौ अन्यतो निवृत्तिर्युक्ता । तेन पूर्वोक्तोदाहरणे परस्परं सोदकत्वप्रयुक्तं त्रिरात्रमेव युक्तं । एवं च १० सपिंडसंतते सपिंडत्वं न निरवधिकं । किंतु अष्टमावध्येव । तथा च मनुः ( अ ५ श्लो ६०)

"सपिंडता तु पुरुषे सप्तमे विनिवर्तते । समानोदकभावस्तु जन्मनाम्नोरवेदने ॥" अग्निपुराणे तु "निवर्तेत चतुर्दशादिति" चतुर्थः पादः । सप्तमस्याते मूलपुरुषस्य तत्संततेश्च परस्परं विनिवर्तत इति शेषः । मात्स्येऽपि ( अ० १८ श्लो २९ )

"लेपभाजश्चतुर्थाद्याः पित्राद्याः पिंडभागिनः । पिंडदः सप्तमस्तेषां सापिंड्यं साप्तपौरुषं"॥ १५ पिंडदस्य मूलपुरुषमभिव्याप्य मूलपुरुषस्य च पिंडदमभिव्याप्य परस्परं सापिंड्यमित्यर्थः । अत एव सपिंडानां सप्तपुरुषावधिकानां अविशेषेण दशरात्रं । समानोदकानां तु त्रिरात्रमिति वदता विज्ञानेश्वरादीनामप्ययमेवाभिप्रायः । यद्यप्यनया रीत्या सापिंड्यस्यैकता निवृत्तत्वादष्टमान्वरस्य द्वितीयाविका उद्वाह्या स्यात्तथापि "पंचमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथेति" ( आ० ५३ ) याज्ञवल्क्येन मातृपितृकुले सप्तमपंचमपर्यंतसापिंड्ये नैं तदापत्तिः । मातृतः मातरं गृहीत्वा २० गण्यमाने य पंचमस्तदूर्ध्वं एवं पितृतः पितरं गृहीत्वा यः सप्तमस्तदूर्ध्वं सापिंड्यं निवर्तत इति अर्थः । तदुक्तं स्पष्टमभियुक्तैः

"बध्वा वरस्य वा तातः कूटस्थाद्यदि सप्तमः । पंचमी चेत्तयोर्माता सापिंड्यं विनिवर्तते।" इति दिक् । क्षत्रियाद्याशौचमाह याज्ञवल्क्यः ( प्रा २२ )

"क्षत्रस्य द्वादशाहानि विशः पंचदशैव तु । त्रिंशद्दिनानि शूद्रस्य तदर्धं न्यायवर्तिनः ॥" २५ पाकयज्ञादिद्विजशुश्रूषादिरतः शूद्रो न्यायवर्ती । तस्य पक्षः । अंगिरास्तु

'सर्वेषामेव वर्णानां सूतके मृतके तथा। दशाहाच्छुद्धिरेतषामिति शातातपोऽब्रवीत् ॥" इत्याह । अत्र देशाचारतो व्यवस्था ।

इदं च दशाहादि मृताशौचं उपनयनात्तरं । ततः पूर्वं त्र्यहादेरुक्तत्वात् *स्त्रीणामुपनय(न) स्थानीयविवाहोत्तरं जात्याशौचं । 'वैवाहिको विधिः स्त्रीणामौपनायनिकः परः' इति ३० वचनात् स्त्रीत्वनोक्तं । अनूढभार्यः शूद्रस्तु षोडशाद्वर्षात् ' ऊर्ध्वं सनधिगच्छन्ति नात्र कार्या विचारणेति" केचिदूर्ध्वमष्टम्या वर्षमेव शुद्धिः शूद्रस्य मासिकाति ' वचनात् "शूद्रो वस्त्रपरि ग्रहादिति" वचनादुपनयनस्थानीयवस्त्रग्रहोत्तरं मृते शूद्रः स्वाशौचनिमित्तं ।

१ ख-निवर्तते * ख ख-पुस्तकयोरेव ।

इद चाशौच अनाहिताग्नेर्मरणदिनात्कार्य । आहिताग्नेस्तु दाहादिनात् । तथा च पैठीनसिः
"अनग्निमत उत्क्वा तेषाशौच च द्विजातिषु । दाहादग्निमतो विंद्याद्विदेशमरणे सति ॥"
'आहिताग्निश्चेत्प्रवसन्म्रियेत पुन सस्कार कृत्वा शववदाशौचमिति' वासिष्ठोक्तेश्च । (४।३७)
अस्थिसचयन तु द्वयोरपि दाहदिनमारभ्यैव
१ "अनग्निमन उत्क्राते साग्ने सस्कारकर्मणः । शुद्धि. सचयन दाहान्मृताहस्तु यथातिथीति" ॥
विप्रस्यास्चशूद्रयोश्च समानधर्मत्वात् । शूद्राणामप्येव । विवाहश्च कालोपलक्षणमिति
विशेष । स च काल सवर्णसपिंडजमृत्योराशौचमाह हारीत ( श्लो ८४ )
"दशाहाच्छुध्यते विप्रो जन्महानौ स्वयोनिषु । षड्भिस्त्रिभिरथैकेन क्षत्रविट्शूद्रयोनिषु ॥"
क्षत्रियवैश्ययोराह विष्णु "क्षत्रियस्य विट्शूद्रेषु सपिंडेषु सपिंडेषु षड्रात्रत्रिरात्राभ्या वैश्यस्य
१० शूद्रे सपिंडे षड्रात्रेण शुद्धिरिति" । दास्यादीना तु स्वामिशुद्ध्या शुद्धि कर्मानधिकारस्तु
मास । तथा चाङ्गिरा
"दासी दासश्च सर्वो व यस्य वर्णस्य यो भवत् । तद्वर्णस्य भवेच्छौच दास्या मासस्तु सूतकमिति" ॥
'प्रतिलोमा धर्महीना' इति स्मरणाच्च तेषामाशौच किंतु केवल जनने मरणे
च मलापकर्षणार्थे शौचमात्र । क्वचित्सद्य शौचमाह देवल
१५ "उद्यतेऽाहवे शस्त्रे क्षत्रधर्महतस्य च । सद्य सतिष्ठते यज्ञस्तथाशौचमिति स्मृत ॥"
सद्य शौचमित्यन्वय । यज्ञा दशाहकर्म एक दिन एव । तथा
"डिंबाहवेनिहताना च विद्युता पार्थिवेन च । गोब्राह्मणस्य चैवार्थे यस्य चेच्छति पार्थिव" ॥
शस्त्रं विना कलहो डिंबाहव । राजा य स्वकार्यार्थमिच्छति तस्य सद्य शौचमित्यर्थ । यत्तु
यम । "डिंबाहवनिहताना च तथैव प्राणसत्रिणा । नदीश्वापदद्रंष्ट्रिभ्य सद्य शौच विधीयते" ॥
२० इति । तत्र नदीग्रहण जलमात्रोपलक्षण । तच्च प्रायश्चित्तार्थे मृताना न प्रमादेनेति शुद्धि-
विवेके । प्राणसत्रिण परक्षार्थ प्राणत्यागिन । यत्तु बृहस्पतिना
"महाहवे विद्युता च राज्ञा गोविप्रपालने । सद्य शौच हतस्याहुस्त्र्यह चान्ये महर्षय ॥"
इति त्र्यहमुक्त तत्पराङ्मुखहतस्य युद्धे गाढप्रहारपीडया युद्धविरामोत्तर रणागणाद्बहिर्मृतस्य
वा ज्ञेय । इद च युद्धमृतस्य सद्य शौचादिक युद्धोद्देशेन प्रवृत्तस्य ज्ञेय । नायुध्यत प्रेक्षकादे ।
२५ युद्धस्योभयनिष्ठत्वात् । अतस्तन्मृतौ यथोक्तमेव । रात्रौ जन्ममृतिरज सु विशेषमाह कश्यप
"उदिते तु यदा सूर्ये नारीणा दृश्यते रज । जनन वा विपत्तिर्वा यस्याहस्तस्य शर्वरी॥
"अर्धरात्रावधि काल सूतकादौ विधीयते ।
"रात्रिं कुर्यात्त्रिभागा तु द्वौ भागौ पूर्व एव तु । उत्तमोऽशः प्रभातेन युज्यते ऋतुसूतके ।
"रात्रावेव समुत्पन्ने मृते रजसि सूतके । पूर्वमेव दिन ग्राह्य यावन्नाभ्युदितो रविरिति ॥"
३० अत्राचारतो व्यवस्था । तत्रापि त्रिभागपक्षमवादियते शिष्टा । वृद्धाश्च ।
रजस्वलाविषये स्मृत्यतरे

---

१ ल-पाट । २ ह्य-सर्व भ-सर्वे । ३ ल-हन । ४ हलहन-पीडया ।

" शुद्धा भर्तुश्चतुर्थेऽन्हि स्नानेन स्त्री रजस्वला । दैवे कर्माणि पित्र्ये च पचमेऽहनि शुध्यति ॥ "

पचमेऽहनीति रजोनिवृत्त्युपलक्षण । स्पर्शादिष्वनुपरतेऽपि रजसि चतुर्थेऽन्हि स्नानेन शुद्ध्यति । दैवपित्र्यकर्मविषये तु चतुर्थेऽन्हि स्नाताऽपि रजोरहितैव योज्येति अर्थ । विशेषमाहात्रि

" रजस्वला यदि स्नाता पुनरेव रजस्वला । अष्टादशदिनादर्वागशुचित्व न विद्यते ॥ ५

" एकोनविंशतेरर्वागेकाह स्यात्ततो द्व्यह । विंशत्प्रभृत्युपरिषु त्रिरात्रमशुचिर्भवेदिति ॥ "

रजोदर्शनमारभ्य पुन सप्तदशदिनाभ्यतरे रजोदर्शने अशुचिता नास्ति । अष्टादशे स्वेकाहाच्छुद्धि । एकोनविंशे द्व्यहाद्विंशप्रभृतिषु त्र्यहाच्छुद्धिरि यर्थ । यस्या विंशतिदिनोत्तरमेव बहुधा रजोदर्शन तद्विषयोऽयमशुचित्वप्रतिषेध । यस्याः पुनर्युवत्या अष्टादशदिनार्वागेव प्राचुर्येण रजोनिस्सरण तस्यास्त्रिरात्रमेवाशुचित्वमिति मिताक्षरायाम् । यत्तु ' चतुर्दशदिनादर्वागशुचित्व १० न विद्यते " इति स्मृत्यतर तत्र स्नानप्रभृतित्वमभिप्रेतमिति न विरोध ।

*रजस्वलासूतिकयोर्मृतौ विशेष स्मृत्यतरे*[1]

" अतरिक्षे मृता ये च वन्हावप्सु प्रमादत । उदक्या सूतिका नारी चरेच्चान्द्रायणत्रय ॥ "

संग्रहे " पचभि स्नापयित्वा तु गव्यै प्रता रजस्वला । वस्त्रातरावृता कृत्वा दाहयेद्विधिपूर्वक ॥ "

तथा । " सूतिकाया मृताया तु कथ कुर्वंति याज्ञिका १५

" कुभे सलिलमादाय पचगव्य तथैव च । पुण्यर्गिभरभिमन्त्र्यापो वाचा शुद्धि लभेत्तत ॥

" तेन ता स्नापयित्वा तु दाह कुर्याद्यथाविधी "त्यादि । पुण्या ऋच आपो हि ष्ठेति ( ऋ स ७।६।५ ) तिस्र । हिरण्यवर्णाश्चतस्र ( य स ५।६।१ )। पुनतु मेति ( ऋ स ७।२।१८ ) नवर्चोऽनुवाक । " यदति यच्च दूरकामिति " ( ऋ स ७।२।२९।१७ )

गर्भिणीमरणेऽपि स्मृत्यतरे विशेष । २०

" यद्दि गर्भवती नारी सशल्या सस्थिता भवेत् । कुक्षी भित्वा तत शल्य निर्हरेद्यदि जीवति ॥

"प्रमीत निक्षिपेत्त तु प्रायश्चित्त तत पर । त्रयस्त्रिंशता कृच्छ्रैस्तु शुद्ध्यत शल्यदोषत ॥

*" सगर्भदहने तत्तद्वर्णज वधपातकमिति ॥ "*

आतुरशुद्धिमाह पराशर

" आतुरे स्नान उत्पन्ने दशकृत्वो ह्यनातुर । स्नात्वा स्नात्वा स्पृशेदेन तत शुद्ध्येत्स आतुर ॥ " २५

उशना " ज्वराभिभूता या नारी रजसा च परिप्लुता। कथ तस्या भवेच्छौच शुद्धि स्याच्छौचकर्मणि॥

" चतुर्थेऽहनि सप्राप्त स्पृशेदन्या [illegible] ता स्त्रिय । सा सचैलावगाह्याऽप स्नात्वा स्नात्वा पुन स्पृशेत्॥

" दश द्वादशकृत्वो वा आचामेच्च पुन पुन । अते च वाससा त्यागस्तत शुद्धा भवेत्तु सा ।

" दद्याच्छक्त्या ततो दान पुण्याहेन विशुध्यतीति " ।

वैधमृतौ विशेष ३०

" वृद्ध शौचस्मृतेर्लुप्त प्रत्याख्यातभिषक्क्रिय । आत्मान घातयेद्यस्तु भृग्वग्न्यनशनाम्बुभि ॥

" तस्य त्रिरात्रमाशौच द्वितीये त्वस्थिसचय । तृतीये तूदक दत्वा चतुर्थे श्राद्धमाचरेत् " इत्या-

---

१ व–ल पाठ । २ व–विशेष । ३ ब्र तु स । ४ अ–ई–द दर्शित ल पुस्तके अ पुस्तके ।

दिना त्रिरात्रमुक्तं । वृद्धादिविशेषणादासन्नमृतिकालपरमेतत् । अनासन्नमरणानां वेणीप्रवेशपति-
सहगमनादिना वैधृतौ तु दशाहमेव साधारणं । शुद्धिविवेके तु वेणीप्रवेशादौ तु सद्यःशौच-
मुक्तं । न तु तत्र किंचिद्साधारणं मूलं । चंडालादिमृतस्याशौचादिनिषेधो गृह्यपरिशिष्टे
चांडालादित्याद्युक्त्वा

५ " न संस्कारविधिस्तेषां नैव कार्योदकक्रिया । रोदनं नैव कर्तव्यं सूतकं च न बंधुभिः ॥
" दग्ध्वा शरीरं प्रेतस्य संस्थाप्यास्थीनि यत्नतः । प्रायश्चित्तं तु कर्तव्यं पुत्रैश्चांद्रायणत्रयम् ॥ " इति
काष्ठवद्दाहनिमित्तं चांद्रायणत्रयं कार्यं । विशेषं वदत्यंगिराः

" चंडालादुदकात्सर्पाद्ब्राह्मणाद्वैद्युतादपि । दंष्ट्रिभ्यश्च पशुभ्यश्च मरणं पापकर्मिणां ॥ "

" उदकं पिंडदानं च प्रेतेभ्यो यत्प्रदीयते । नोपतिष्ठति तत्सर्वमंतरिक्षे विनश्यतीति ॥ "

१० अंत्येष्टिपद्धतौ

" सूतिका तु यदा नारी विस्नाता मरणं गता । त्रिवर्षपूर्णपर्यन्तं शुद्ध्येत्कृच्छ्रेण सर्वदा ॥"
एतदाद्यत्र्यहविषयम् ।

" सूतिका तु यदा नारी रजसा तु परिप्लुता । म्रियते चेत्तु सा नारी द्विवर्षं कृच्छ्रमाचरेत् ॥ "
एतद्द्वितीयत्र्यहविषयम् ।

१५ " सूतिका तु यदा साध्वी विस्नाता मरणं गता । अब्दकृच्छ्रेण शुद्ध्येत व्यासस्य वचनं यथा ॥ "
एतत्तृतीयत्र्यहविषयम् । अत्राशक्तौ पक्षांतरमुक्तं तेनैव

" सूतिका तु यदा नारी विस्नाता मरणं गता । त्रिपण्णवदिनाद्र्वागेकाब्देन विशुद्ध्यति ॥"
दशाहप्रभृति मासाभ्यन्तरे विशेषमाह

" सूतिका तु यदा नारी प्राणांश्चैव परित्यजेत् । मासमेकावधिर्यावत्त्रिभिः कृच्छ्रैर्विशुद्ध्यति ॥

२० " नाशौचं नोदकं नाश्रु न दाहाद्यंतकर्म च । ब्रह्मदण्डहतानां च न कुर्यात्कटधारणम् ॥
इति संभवात् । ब्रह्मदण्डो ब्रह्मशापः । अभिचारो वा । कटशब्देन शववहनोपयोगि खट्वादि ।
एतच्चात्मघातोद्देशकस्वव्यापारे सति । " प्रायोनाशकशस्त्राग्निविषोदकोद्बंधनप्रपतनैश्चेच्छता-
मिति " गौतमोक्तेः( अ. १४ सू. ११ ) । प्रायो महाप्रस्थानं । " हतानां नृपगोविप्रैरन्वक्षं
चात्मघातिनामिति " याज्ञवल्क्योक्तेश्च (प्रा. २१ ) । तदुद्देशप्रतिपत्तिर्मिताक्षरोदाहृतस्मृत्यंतरे

२५ " आत्मनस्त्यागिनां नास्ति पतितानां तथा क्रिया । तेषामपि तथा गंगातोये संस्थलनं हितम् ॥ "
गंगेति संभवाभिप्रायेण । अत एव स्मृत्यंतरे । " गंगायां प्रक्षिपेद्देहं सरित्स्वन्यासु वा ततः "
इति । अग्न्यादेस्तु मिताक्षरायां

" वैतानं प्रक्षिपेदप्सु गृह्याग्निं च चतुष्पथे । पात्राणि च दहेदग्नौ यजमाने वृथामृते ॥ "
वृथाऽऽत्मघातेन । तथा

३० " महापातकसंयुक्तो दैवात्स्यादग्निमान्यदि । पुत्रस्तान्पालयदग्नीन् युक्त आ दोषसंक्षयात् ॥
" प्रायश्चित्तं न कुर्याद्यः कुर्वन्वा म्रियते यदि । गृह्यं निर्वापयेच्छ्रौतं अप्स्वस्येत्सपरिच्छदमिति "॥
आत्मघाते प्रायश्चित्तं निगमे

---

1 अ-इ-फ-ब-प-र-न-फ-प-नीह प्रतिरतिश्च स्मृत्यंतरे ।

"आत्मघातकशुद्ध्यर्थं चरेच्चान्द्रायणद्वय । तप्तकृच्छ्रचतुष्क च त्रिंशत्रिष्काणि चाचरेदिति"॥ आत्मघातिदाहादौ प्रायश्चित्त मिताक्षरायां (प्रा श्लो. ६)

*"कृत्वाऽग्निमुदक दान स्पर्शन वहन कथा । रज्जुछेदाश्रुपात च तप्तकृच्छ्रेण शुद्ध्यति" । इति । यत्तु मिताक्षराया ( प्रा श्लो ६ ) "स्पर्शमात्रे चैकरात्रोपोषणमिति" तत्तप्तकृच्छ्राशक्तौ काद्यन्तरितस्पर्शो वा ज्ञेय । तप्तकृच्छ्रस्तु ५

"तप्तक्षीरघृताम्बूनामेकैक प्रत्यह पिबत् । एकरात्रोपवासश्च तप्तकृच्छ्र उदाहृत इति ॥" सवत्सरोर्ध्वं तु गवादिहताना अपि दाहादि कार्यमेव ।

"गोब्राह्मणहताना च पतिताना तथैव च। ऊर्ध्वं सवत्सरात्कार्यं सर्वमप्यौर्ध्वदैहिकमिति"

षट्त्रिंशन्मतात् । नारायणबलि कृत्वा तु तदैव कार्यं ।

"अर्वाक्सवत्सरात्कुर्याद्दहनादि यथोदित । कृत्वा नारायणबलिमनित्यत्वात्तदायुष ॥" १० इति स्मृते ।

"नारायणबलि कार्यो लोकगर्हाभयान्नरै ।तथा तेषा भवेच्छौच नान्यथेत्यब्रवीद्यम" ॥ इति छागलेयाक्तेश्च ।

"विष्णु समर्चयेद्देव यम वैवस्वत तथा । एकादश्या च शुक्लाया पचम्या श्रवणेन वा ॥

"वृथामृतानां शुद्ध्यर्थं कार्यो नारायणो बलि । १५

"दशपिंडान् घृताभ्यक्तान् दर्भेषु मधुसयुतान्। तिलमिश्रान्प्रदद्याद्वै सयुतो दक्षिणामुख"॥ इति ।

## अथ शौनकसूत्रार्थसारानुसारी प्रयोग ॥

शुक्लैकादश्या पचम्या श्रवणेन वा तिथ्यादि स्मृत्वा"अमुकशर्मण और्ध्वदैहिके सप्रदानत्व-सिध्द्यर्थं नारायणबलिं करिष्ये" इति सकल्प्य पचकलशान् सजलान् व्रीहिषु यवेषु वा गधसर्वौषध-दूर्वापल्लवसप्तमृत्फलरत्नसुवर्णकलशयुतान् वस्त्रवेष्टितान् सस्थाप्य तेषामुपरि ताम्रादिपात्रेषु २० ब्रह्मविष्णुशिवान्वैवस्वत यम प्रेत च पूजयेत्। तत्र क्रमान्मन्त्राः। 'हिरण्यगर्भ' (ऋ स ८।७।३) पुरुषसूक्त (ऋ स. ८।४।१७) कद्रुद्राय (ऋ स १।३।२६) यमाय सोम (ऋ स ७।६।१६) चतुर्थ्यतनमोऽन्त च प्रेतनाम । ततो गृह्योक्तमार्गेणाग्निस्थापनादिनारायणदैवत्यचरुश्रपणात कृत्वा पुरुषसूक्तेन (ऋ. स ८।४।१८) प्रत्यृच षोडशाहुतीर्हुत्वा स्विष्टकृदादि समाप्य कलशसमीपे "अमुकगोत्रायामुकशर्मणे प्रेताय विष्णुरूपिणेऽय पिंड उपतिष्ठतामिति" मधुघृततिलयुतान् दश २५ पिंडान् प्राचीनावीती दक्षिणाग्रकुशेषु दत्वा "यत्ते यमामिति" (ऋ. स ८।१।२०) सूक्तेनानु-मत्र्य शखोदकेन कुशैरभ्युक्ष्याभ्यर्च्य प्रवाहणात कृत्वा नद्या प्रक्षिप्य "अमुकशर्मा अमुकगोत्रो विष्णुरूपी तृप्यत्विति" पुरुषसूक्तस्य प्रत्यृचमते उच्चारयन् षोडशवार प्रेत सतर्प्य

"ब्रह्मविष्णुमहादेवा यमश्चैव सकिंकरः। बलि गृहीत्वा कुर्वंतु प्रेतस्य च शुभा गतिमिति॥" ब्रह्मादीन् प्रार्थयेत् । तेभ्यः पुरुषाहारमितमन्न बलिं दत्वा प्रतिदैवत त्रिविधफलघृतशर्करा- ३० मधूनि निवेद्य परदिनकर्तव्यश्राद्धार्थं पच विप्रानामन्त्र्य रात्रिं जागरणेनातिवाह्य परदिने

१ कदच-सादनत्व । २ ल-प्रवहणांत । ३ ल-न्दै ।

मध्यान्हे ब्रह्मादीन्संपूज्य तिथ्यादि संकीर्त्य " अमुकशर्मणेऽमुकगोत्रस्यौर्ध्वदैहिके संप्रदानत्वयोग्यतासिद्धये पंचैकोद्दिष्टश्राद्धानि तंत्रेण करिष्ये " इति संकल्प्य श्राद्धानि कुर्यात्। तत्र देवता ब्रह्मादय एव ब्रह्मादीनां पूजार्पिंडदानादिषु सव्यं । प्रेतविप्रायाऽधिका दक्षिणा भूहिरण्यादिका । अक्षय्यस्थाने कुशतिलतुलसीयुतशंखजलधारेति विशेषः। ततस्ते विप्राः
५ पवित्रहस्ताः अमुकशर्मणेऽमुकगोत्राय प्रेताय विष्णुरूपिणे इदं तिलोदकमुपतिष्ठतामिति प्रत्येकं तिलोदकं दद्युः। यजमानः स्नात्वा गुडशर्करापायसादियुतं स्वजनयुतो भुंजीतेति नारायणबलिप्रयोगः। मरणोद्देशेन सर्पसमीपगमनादिना सर्पेण हते तु वर्षपर्यंतं प्रतिपंचमि नागं संपूज्य वर्षांते नारायणबलिं कृत्वा सौवर्णं नागं गां च विप्राय दत्वा सर्वमौर्ध्वदैहिकं कुर्यात्। तथा च व्यासः पुराकल्पं पपाठ

१० " सुवर्णभारनिष्पन्नं नागं कृत्वा तथैव गां। व्यासाय विधिवद्दत्वा पितुःानृण्यमाप्तवान्॥"

भारनिष्पन्नमिति वा पाठः। भारः पलसहस्रद्वयं ॥ "तुलास्त्रियां पलशतं भारः स्याद्विंशतिस्तुले"ति कोशात् ( २।९।८७३ )। प्रायो शैस्यार्थविधिः। प्रमादमृतानां तु चान्द्रायणं तप्तकृच्छ्रद्वयं तस्य विशुद्ध्य इति प्रायश्चित्तं कृत्वा सद्य एव दाहादि कार्यं। तत्र चाङ्गिराः

" अथ कश्चित्प्रमादेन म्रियेताग्न्युदकादिभि । तस्य शौचं विधातव्यं कर्तव्या चोदकक्रियेति॥"

१५ पुराणे।

" असाध्यव्याधिना युक्तः स्वव्यापाराक्षमः पुमान्। प्रविशत्यनलं दीप्तं करोत्यनशनं तु वा॥

" अगाधतोयराशिं वा भृगोःपतनमेव वा। गच्छेन्महापथं वाऽपि तुषारगिरिमादरात्॥

" प्रयागवटशाखाग्राद्देहत्यागं करोति वा। स्वयं देहविनाशश्च प्राप्ते काले महामतिः॥

"उत्तमानाप्नुयाल्लोकान्नात्मघाती भवेत्क्वचित्। महापापक्षयात्स्वर्गे दिव्यान् भोगान्समश्नुते॥

२० " एतेषामधिकारोऽस्ति सर्वेषां सर्वजंतुषु। नराणामथ नारीणां सर्ववर्णेषु सर्वदा॥" इति।

" ईदृशं मृतकं येषां जीवानां कुत्रचिद्भवेत्। आशा...व्यहंतेषां वज्रानलहते तथा॥"

इत्येतदपि वृद्धादीनामेवोक्तमनुवाक्योक्तमृतिविषये त्रिरात्रमाशौचविधायकं बोध्यं।

ऊर्ध्वोच्छिष्टादिमरणे पराशरः

" ऊर्ध्वोच्छिष्टे ह्यधोच्छिष्टे अन्तरिक्षे मृतिर्यदि। कृच्छ्रत्रयं प्रकुर्वीत आशौचमरणेऽपि च "। इति।

२५ " तथा ऊर्ध्वोच्छिष्टे ह्यधोच्छिष्टोभयोच्छिष्टे तथैव च। अस्पृश्यस्पर्शमरणे खट्वादौ मरणेऽपि च॥

"श्वानक्रव्यादसंस्पर्शे कृमिकीटोद्भवेऽपि च। तत्तद्दोषानुसारेण प्रायश्चित्तं समाचरेत्॥

" कृच्छ्रास्त्रिपट्पंचदशान् चांद्रायणमथापि वेति "। अत्र दोषानुसारेण प्रायश्चित्ते तारतम्यं कल्प्यं। ब्रह्मचारिमरणे स्मृत्यंतरे विशेषः

" येषां कुले ब्रह्मचारी निधनं प्राप्नुयाद्यदि। तत्कुलं भयमाप्नोति सोऽपि दुर्गतिमाप्नुयात्॥

३० " महत्त्वं प्राप्नुयाद्बोधिद्रुमेऽनवरत वसेत्।

" तस्यापि तस्य वंशस्य मतिमिच्छन्महीयसीं। विधानं च विधायाशु और्ध्वदैहिकमाचरेत॥

---

१ ल-पिंडपूजा। २ ल-पंचम्यां। ३ इखनपवदघफ-क्या। ४ ल-तस्य। ५ ल-आदित्यपुराणे। ६ क-शं। ७ कह्री-गौ। ८ अइक-चगधनफ एतश्पानु।

" मृतस्य म्रियमाणस्य षडङ्ग व्रतमादिशेत्। त्रिशब्दयो ब्रह्मचारिभ्यो दद्यात्कौपीनकान्नवान्॥
" हस्तमात्रा कर्णमात्रा दद्यात्कृष्णाजिनानि च॥
" पादुकाऽक्षमाल्यानि गोपीचन्दनमेव च। मणिप्रवालमालाश्च ब्रह्मसूत्राणि चार्पयेत्॥
" मनैस्तत्तल्लिङ्गकैश्च ब्रह्मसायुज्यसिद्धये। अभावे व्रतिना पूज्या गृहस्था साधव शुभा॥
" एव कृते विधाने तु विघ्नस्तस्य न जायते" इति। स्नातकमरणे वा। ५
" स्नातको ब्रह्मचारी च निधन प्राप्नुयाद्यदि। संयोज्य चार्कविधिना संयोज्यो तौ परस्परमिति॥"
कुष्ठिमरणे यम
" मृतस्य कुष्ठिनो देह निखनेद्वाह्यभूमिषु। वासरत्रितय पश्चादुद्धृत्यान्यत्र तद्दहेत्॥
" न गङ्गाप्लवन कार्य निक्षेप विधिरुच्यते। षडब्दव्रतपूर्णेन विधिनाऽस्य कृतु चरेत्॥ १०
" ततोऽस्थिसचय तस्य गङ्गाया प्रक्षिपेत्सुधी। मासि मासि तत कुर्यान्मासि श्राद्धानि पार्वणम्॥
" सकल्पविधिना कश्चित्प्रवदति मनीषिण॥" इति।
पर्युषितदाहे गालव
" दिवा वा यदि वा रात्रौ शवस्तिष्ठति कर्हिचित्। तत्पर्युषितमित्याहुर्दहन तस्य का गति।
" पञ्चगव्येन सस्नाप्य प्राजापत्यत्रय चरेत्॥" प्रेतधनहारिणे प्रेतक्रियाकरणे शङ्ख १
" प्रेतस्य प्रेतकार्याणि अकृत्वा धनहारक। वर्णाना यद्वधे प्रोक्त तद्व्रत प्रयतश्चरेत्॥"

अथ मृतेतिकर्तव्यता॥

मनु (अ ५ श्लो १०३)
" न विप्र स्वेषु तिष्ठत्सु मृत शूद्रेण हारयेत्। अस्वर्ग्या ह्याहुति सा स्याच्छूद्रसस्पर्शदूषिता।"
निर्हरणाशौचमाह मनु (अ ५ श्लो १००) २०
" असपिण्ड द्विज प्रेत विप्रो निर्हृत्य बन्धुवत्। विशुध्यति त्रिरात्रेण मातुराप्ताश्च बान्धवान्॥
" यद्यन्नमत्ति तेषा तु दशाहेनैव शुध्यति। अनदन्नन्नमन्हैव न चेत्तस्मिन्गृहे वसेदिति।"
तद्गृहवासिनस्तदन्नमदतो निर्हर्तिव्रतस्यहं। तद्गृहवासिनस्तदन्नाशिनोऽपि तस्य दशाह। अतद्गृहवासिनस्तदन्नभोजिनश्च तस्याहोरात्रमित्याशय। बन्धुवदित्यनेन धनग्रहणोपाधिं विना सवर्णशवनिर्हरणे दशाहाद्याशौचमिति निबन्धकृत। ग्रामान्तरवासिनो निर्हर्तिव्रत सद्योति। २५
" प्रेतस्पर्शिना ग्राम न प्रविशेयुरानक्षत्रदर्शनाद्रात्रौ चेदादित्यस्येति" पारस्करसूत्रे (३।१०।३५) अन्यवर्णनिर्हरणे तत्तदुक्ताशौच गौतमोक्त। (१४।२६) "अवरश्चेद्वर्ण पूर्व वर्णमुपस्पृशेत्पूर्वोऽवर"। तत्र शवोक्तमाशौचमिति। उपस्पृशेन्निर्हरेत्।* अनाथनिर्हरणे पराशर (अ ३ आ का श्लो ३९।४०)
" अनाथ ब्राह्मण प्रेत ये वहति द्विजातय। पदे पदे यज्ञफलमानुपूर्व्याल्लभति ते॥ ३०
" न तेषामशुभ किञ्चित्पाप वाऽशुभकर्मणा। जलावगाहनात्तेषा सद्य शौच विधीयते॥"
सन्यासिना मृतानाशौच नास्तीति स्मृत्यर्थसारे। तथा ब्रह्मचारिसन्यासिनामप्याशौच नास्तीति। ब्रह्मचारिविषये योगी (प्रा- १५)

१ क-तत पर। * ल-पाठ।

" आचार्यपितृपाध्यायान्निर्हृत्यापि व्रती व्रती। सकटान्नं च नाश्नीयान्न च तैः सह संवसेत्॥"
कट आशौचिस्त्रापार्थं । तदन्नमाशौच्यन्नं । अर्थादितदन्यानिर्हरणे व्रतभङ्गः । हीनानुगमने आशौचमाह याज्ञवल्क्यः ( प्रा २६ )*

" ब्राह्मणेनानुगन्तव्यो न शूद्रो नाद्विजः क्वचित्। अनुगम्याम्भसि स्नात्वा स्पृष्ट्वाऽग्निं घृतभुक् शुचिः "।

५ द्विजो विप्रभिन्नः । स्वाव्यवहितहीनवर्णानुयाने तु ब्राह्मणादेर्वसिष्ठोक्तमहोरात्रं। एकान्तरानुव्रजने पक्षिणी । दिवसावुभयतः पक्षौ इव यस्या रात्रेः सा पक्षिणी । व्यतरत्वे पराशरः ( अ ३ आ का श्लो ४५।४६ )

"प्रेतीभूतं तु यः शूद्रं ब्राह्मणो ज्ञानदुर्बलः। अनुगच्छेन्नीयमानं स त्रिरात्रेण शुद्ध्यति ॥ "

" त्रिरात्रे तु ततः पूर्णे नदीं गत्वा समुद्रगाम्। प्राणायामशतं कृत्वा घृतं प्राश्य विशुध्यतीति " ॥

१० योगी ( प्रा २ ) " स दग्धव्य उपेतश्चेदाहिताग्न्यावृतार्थवत् "। उपेत उपनीत । आहिताग्न्यावृता आहिताग्निदाहप्रक्रियया। लौकिकाग्निना । अग्निविशेष निर्विशेष्य निषेधान् देवलः

"चाण्डालाग्निरमेध्याग्निः सूतिकाग्निश्च कर्हिचित्।पतिताग्निश्चिताग्निश्च न शिष्टग्रहणोचिताः ॥"इति यमः " यस्यानयति शूद्रोऽग्निं तृणं काष्ठं हवींषि च। प्रेतत्वं हि सदा तस्य स चाधर्मेण लिप्यते ॥"

अत्रानाहिताग्नेर्गृह्याग्निना । आहिताग्नेस्तु श्रौताग्निभिरिति । तत्रापि स्वगृह्योक्तविधिनैव ।

१५ कात्यायनः " आहुतिं जुहोति पुत्रो भ्राता अन्यो वा ब्राह्मणोऽस्मात्त्वमधिजातोऽसि त्वदयं जायतां पुनः । असौ स्वर्गाय लोकाय स्वाहेति "। असावित्यत्र प्रेतनामप्रथमान्तं वदेत्। प्रचेताः

" स्नानं प्रेतस्य पुत्राद्यैर्विलेपो पूजनं ततः। नग्नदेहं दहेन्नैव किंचिद्देयं परित्यजेत् " ॥

किंचिद्देयं शववस्त्रैकदेशादिकं स्मशाने प्रक्षिपेदिति मिताक्षरायां। (पृ १६२५ २५)।स्मृत्यन्तरं॥

२० " रात्रौ वा रात्रिशेषे वा म्रियते चेद्द्विजातयः। दाहं कृत्वा यथान्यायं द्वौ पिंडौ निर्वपेत्सुतः ॥

" परदिने आद्यद्वितीयौ द्वावपरपिंडौ निर्वपेदिति " केचित् । रात्रावेवैकोऽवयवपिंडो विषमश्राद्धीयश्चापर एव द्वाविति परे । स्मृतिसमुच्चयेऽपि

" रात्रौ दग्ध्वा तु पिंडान्तं कृत्वा वपनवर्जितं। वपनं नेष्यते रात्रौ श्वस्तना वपनक्रिया "॥

" संध्यायां वा तथा रात्रौ दाह" इत्यादि पारिजातोदाहृतनिषेधकनिगमवचनं तु दिनमृतस्य

२५ न संध्यादौ दाहादिकमित्येवपरं । दाहानंतरं याज्ञवल्क्यः ( प्रा ३ )

" सप्तमाद्दशमाद्वाऽपि ज्ञातयोऽभ्युपयन्त्यपः । ' अप नः ' शोशुचदघमनेन पितृदिङ्मुखाः ॥ "

" सप्तमाद्दशमाद्वादिनादर्वाक 'अपन' इति मंत्रेण प्रथमतृतीयपंचमसप्तमनवमेषु प्रेतस्य नामगोत्रे उच्चार्य्य तृप्यत्वित्युदकं दद्युरिति विज्ञानेश्वरः । युक्तं तु स्नान एव मंत्रांगमिति ।

" अप नः शोशुचदघमिति दक्षिणाभिमुखा मज्जति प्रेतायोदकं सकृत् प्रसिंचति ।

३० अंजलिनाऽसावेतत्ते उदकमिति " पारस्करोक्तेः (३।१०।१९।२१)। प्रतिदिनमंजलिवृद्धिरपि ज्ञेया । अत्र " दक्षिणाभिमुखा ब्राह्मणस्य दक्षिणमुखा प्राङ्मुखाश्च राजन्यवैश्ययोरिति प्रचेतसः

---

१ ल-आहिताग्ने । २ त्रिरात्रमशुचिर्भवेदिति स्मृतौ पाठः । ३ ल-चापि ।

विशेष उक्त । अत्रं " विप्रे दशाजलय । क्षत्रिये द्वादशा वैश्ये पचदश शूद्रे त्रिंशदिति " यमोक्तो विशेषोऽनुसधातव्य । एतच्चोदकदान मातापितृमातामहाचार्यादीना नित्य भागिनेयादीना-मानित्य । तथा च याज्ञवल्क्य (प्रा. ४)

" एव मातामहाचार्यप्रेतानामुदकक्रिया । कामोदक सखिप्रत्तास्वस्रीयश्वशुरर्त्विजा ॥ " ज्ञातित्वे सत्यपि क्वचिन्निषेधस्तेनैवोक्त (आ ५) "न ब्रह्मचारिण कुर्युरुदक पतितास्तथा"। पतिता प्रच्युत द्विज तिकर्माधिकारा.। ब्रह्मचारिणामुदकदानादिनिषेधो मातृपित्रादिव्यतिरिक्तविषय इत्युक्त प्राक्। ५

आशौचनियमानाह याज्ञवल्क्य (प्रा १६।१७)

" क्रीतलब्धाशना भूमौ शयीरस्ते पृथकपृथक् । पिंडयज्ञावृता देय प्रेतायान्न दिनत्रय ॥ "
" जलमेकाहमाकाशे स्थाप्य क्षीर च मृन्मये ॥ " आकाशे शिक्यादौ । द्रव्यद्वयनिधानसामर्थ्या द्दयो शरावयोर्भेदेन निधान । ' प्रेतात्र स्नाहीति ' मत्रश्च ' प्रेतेद पिबे ' त्युक्त इति विज्ञाने- १० श्वरादय (पृ० १७० पं०९–१९)। हरिहरस्तु मृन्मय इति पात्रैकवचनसामर्थ्यात्प्रेतात्र स्नाहीति मत्रेणैकत्रोभयनिधान मन्यते । गारुडे दुग्धनिधान व्यहमुक्त

" अपक्वे मृन्मये पात्रे दुग्ध दद्याद्दिनत्रयमिति " । मात्स्ये (अ १८ श्लो ६।७)

" तस्मात्प्रेतपुर प्रेतो द्वादशेऽहनि नीयते । गृहपुत्रकलत्र च द्वादशाह स पश्यति ॥

" तस्मान्निधेयमाकाशे दशरात्र पयस्तथा । सर्वतापोपशान्त्यर्थमध्वश्रमविनशानमिति ॥ " १५ विष्णु यावत्याशौचदिनानि तावत्पिंडदानमाह " यावदाशौच तावत्प्रेतायोदक पिंड च दद्यु रिति " । पारस्कर " प्रेतेभ्य सर्ववर्णेभ्य पिंडान्दद्युर्दशैव तु " ॥ मरीचि

" प्रेतपिंड बहिर्दद्याद्दर्भमत्रविवर्जित । प्रागुदीच्या चरु कृत्वा स्नात प्रयतमानस ॥ " दर्भवर्जितत्वमनुपनीतविषय । " असस्कृतानां भूमौ पिंड दद्यात् सस्कृताना तु कुशेष्विति " प्रचेतोवचनात् । पाषाणे वा देया । " भूमौ माल्य पिंड पानीय उपले वा दद्युरिति " २० शखोक्त । शातातप:

" दिवसे दिवसे देय पिंड एवं क्रमेण तु । सद्य शौचे प्रदातव्या सर्वेऽपि युगपत्तथा ॥
" आशौचस्य ह्रासेऽपि पिंडान्दद्याद्दशैव तु " त्रिरात्राशौचे पारस्कर
" प्रथमे दिवसे देयास्त्रय पिंडा: समाहितै । द्वितीये चतुरो दद्यादस्थिसचयन तथा ॥
" त्रींस्तु दद्यात्तृतीयेऽह्नि वस्त्रादि क्षालयेत्तत " इति । गृह्यकारिकाया २५
' यत्र त्रिरात्रमाशौच द्वितीयेऽह्न्यस्थिसचय । नवश्राद्ध वृषोत्सर्ग चतुर्थेऽह्नि समाचरेत् ॥
" आशौच तु यदा सद्यो भवेत्तत्र कथंचन । यथाकाल नवश्राद्धमिति सत्यव्रतोऽब्रवीत्॥
" वृषोत्सर्गादि यत्तत्र कुर्यादेकादशेऽहनीति ॥ "

परिशिष्टे

" असगोत्र सगोत्रो वा यदि स्त्री यदि वा पुमान्। प्रथमेऽहनि यो दद्यात्स दशाह समापयेत् ॥ " ३० प्रदीपधृतं वच

१ ल-भ । २ द-दयात । ३ ह्र-एव । ४ ह्र-पं । ५ ह्र-त्व ।

" सगोत्रो वाऽसगोत्रो वा योऽग्निं दद्यात्सखे नरः। सोऽपि कुर्यान्नवश्राद्धं शुध्येत्तु दशमेऽहनीति ॥"

अत्रापि समानकर्तृतामात्रमेव विधेयं । दशमेऽहनीति तु मानांतरप्राप्ताशौचावधे-रनुवादः। " यदि सत्राय दीक्षितानां साम्युतिष्ठासेत्सोममपमज्य विश्वजिताऽतिरात्रेण यजेते त्यत्र प्राप्तविभाज्यद्रव्योपलक्षकसोमपदवत् तेन क्षत्रियादिर्द्वादशाहादिभिः शुद्ध्येत् । त्रिरात्राशौच-

५ वांस्तु तावतैव । पक्षिण्येकाहादिमानपि त्रिरात्रेणैव " असंबंधिद्विजान्वेहित्वा दहित्वा च सद्यःशौचं सवधे त्रिरात्रमिति " पैठीनसिना दाहमात्रे संबंधिनस्त्रिरात्रविधानात् । दाहवहनयोः साहित्य त्वविवक्षितमनुवाद्य विशेषणात् । यत्तु केचिद्दाहपिंडदानादिनिमित्त दशाहादिजात्या-शौचं चरंति तन्निर्मूलं । यत्तु

"निरन्वये सपिंडे तु मृते सति दयान्वितः।तदशौचं पुरा चीर्त्वा कुर्यात्तु पितृवत् क्रियामिति"॥

१० वचस्तदाशौचाप्रयोजकमृतावाशौचमचीर्त्वाऽकृत्वैव दयया धर्मार्थं क्रियां कुर्यादित्येतत्परं । अथवा धर्मार्थत्वाभावे स्नेहानुबंधेऽपि क्रियानिमित्ताशौचे मानाभावाद्दाहनिमित्तं त्रिरात्रं कृत्वा दशाहपर्यंतं क्रिया कुर्यात् इत्येतत्परम् । अत एव चीर्त्वेति क्त्वावगतमाशौचसमाप्त्युत्तर-कालत्वं क्रियासमाप्ते संगच्छते । उत्तमवर्णदाहे तु " अवरश्चेद्वर्णः पूर्वं वर्णमुपस्पृशेत्पूर्वो वाऽवरं । ततस्तच्छवोक्तमाशौचमिति-"* गौतमीयं । ( अ. १४ ) तज्जात्याशौचं । यद्यपि

१५ तन्नोपस्पर्शनं निर्हरण व्याख्यातं मिताक्षरायां तथापि कैमुतिकन्यायेन दाहेऽपि तद्भवति । ब्राह्मे

" योऽसवर्णं तु मूल्येन नीत्वा चैव दहेन्नरः। आशौचं तु भवेत्तस्य प्रेतजातिसमं ध्रुवेति ॥"

मनुः ( अ० ११ श्लो० १९७ )

" व्रात्यानां याजनं कृत्वा परेषामन्त्यकर्म च । अभिचारमहीनं च त्रिभिः कृच्छ्रैर्विशुद्ध्यतीति "॥

२० अहीनयाजकान्त्येष्टियाजकयोरेव तत्प्रायश्चित्तमिति विज्ञानेश्वर । ( पृ. ३०४ ) मेधातिथिस्त्वहीनस्य विहितत्वेन न तत्रेदं प्रायश्चित्तं किंतु रागप्राप्ते तद्याजन एव परान्त्यकर्मणस्तु निषिद्धत्वात्तत्साक्षात्कर्तुरेवेदमिति युक्तमूचे । वच स्वरसोऽप्येवं । देवलः

" ब्रह्मचारी न कुर्वीत शववाहादिका क्रियाः। यदि कुर्याच्चरेत्कृच्छ्रं पुन संस्कारमेव चेति ॥"

आदिपदमलकारादेर्मोहकं न तु दाहादेः । *तत्र प्रायश्चित्तस्य गुरुत्वात् । पैठीनसिरपि

२५ " ब्रह्मचारिणः शवकर्मणो व्रतान्निवृत्तिरिति"। उदकदानप्रतिषेधमाह याज्ञवल्क्यः (प्रा. ५) " न ब्रह्मचारिणः कुर्युरुदकं पतितास्तथा " ब्रह्मचर्योत्तरकाल पूर्वमृतानां सपिंडानामुदकदान-माशौच चाह मनुः ( अ० ५ श्लो. ८७ )।

" आदिष्टी नोदकं कुर्यादाव्रतस्य समापनात् । समाप्ते तूद कंकृत्वा त्रिरात्रमशुचिर्भवेदिति ॥ "

आदिष्टी ब्रह्मचारीति विज्ञानेश्वर ।

केचित्तु प्रक्रांतप्रायश्चित्त आदिष्टीति मन्यन्ते । वस्तुतस्तु व्रतादेशोऽस्यास्तीत्यादिष्टीति

---

१ ड-न्य, २ ड-त्त । ३ ड-वनयो । ४ ड-तत्र । ५ ल-भवेदेव । *ख-पुस्तके । ६ स-आदि-ष्टमा दशे सोस्यातीति ।

व्युत्पत्त्या द्वावप्यादिष्टिनाविति* स्नेहलोभहेतुक्रियायाः सामान्यवचनेनैव निषेधे सिद्धे ब्रह्मचारिणां प्रति पुनर्निषेधः धर्मार्थमपि गोचरयति । अन्यथा वैयर्थ्यात् । मनुः ( अ. ५ श्लो. ९० )

" आचार्यं स्वमुपाध्यायं मातरं पितरं गुरुं । निर्हृत्य तु व्रती प्रेतं व्रतेन न वियुज्यते ॥ " इति ।

**मिताक्षरायां**

" गुरोः प्रेतस्य शिष्यस्तु पितृमेधं समाचरेत् । प्रेताहारैः समं तत्र दशरात्रेण शुध्यति ॥ " प्रेताहारैस्तदन्नभोजने । एतद्दशरात्रं तदन्नभोजन एव । तदभावे त्वेकरात्रं वक्ष्यते । पुनरुपनयनं तु न भवति । क्रियाया विहितत्वात् । आचार्यादतिरिक्तक्रियायां त्वाशौचं पुनरुपनयनं प्रायश्चित्तं च भवति । अत एव याज्ञवल्क्यः (प्रा. १५) "आचार्यपित्रुपाध्यायान्निर्हृत्यापि व्रती व्रतीति ।" निर्हरणमग्निदानादिक्रियांतरस्याप्युपलक्षणं । अत एव भविष्यपुराणे

" व्रतस्थोऽपि यथा पुत्रः पितुः कुर्यात्क्रियां नृप । तथा मातामहस्यापि दौहित्रः कर्तुमर्हतीति ॥ " १०

**माधवीये ब्राह्मे**

" आचार्यं वाऽप्युपाध्यायं गुरुं वा पितरं तु वा । मातरं वा स्वयं दग्ध्वा व्रतस्थस्तत्र भोजनं ॥

" कृत्वा पतति नो तस्मात्प्रेतान्नं तन्न भक्षयेत् । अन्यत्र भोजनं कुर्यान्न च तैः सह संवसेत् ॥

" एकाहमशुचिर्भूत्वा द्वितीयेऽहनि शुध्यतीति ॥ " तुशब्देनैतदाशौचवैलक्षण्यं गम्यते । तेन पित्रादिभिन्नक्रियायां दाहे वहने तदन्नभोजने वा पूर्णाशौचप्रायश्चित्तपुनरुपनयनानि १५ भवंति । चंद्रिकायां संवर्त्तः ।

" पित्रोर्गुरोर्विपत्तौ तु ब्रह्मचार्यपि यः सुतः । सव्रतश्चापि कुर्वीत अग्निपिंडोदकक्रियां ।

" तत्राशौचं न कर्तव्यं संध्या चैव न लुप्यते । अग्निकार्यं च कर्तव्यं सायं प्रातश्च नित्यशः । "

इति । इदं च प्रागुक्ताग्निदाननिमित्तत्र्यहनिषेधार्थं न तु श्राद्धादेः । प्रसक्त्यभावात् । " तातात्वाचार्यकेऽप्यडेनलजलतिलदो ब्रह्मचारी तदीयाशौचं " इति त्रिंशत्पद्यस्यौर्ध्वदैहिक २० पूर्वन्न दशाहाद्याशौचमिति केषांचिल्लेखस्य चाभिप्रायं न जाने । यत्तु प्रकाशे प्रजापतिः

" ब्रह्मचारी यदा कुर्यात्पिंडनिर्वपणं पितुः । तावत्कालमशौचं स्यात्पुनः स्नात्वा विशुद्ध्यतीति ॥ "

तत्र तावत्कालं ब्राह्मोक्तमेकाहमित्यर्थः । दिवोदासीयस्तु आद्यदिने पूर्णमाशौचं संध्यादिकर्मलोपश्च द्वितीयादिदिनेषु पिंडदानादिकाल एवाशौचं । न तु तत पूर्वोत्तरकालयोरित्याह । तन्न । ब्राह्मवाक्यमूलाऽमूलांतरकल्पनापत्तेः प्रत्यहमनेकाशौचोत्पत्तेरनेकल्पनागौरवाच्च । २५ हारीतः

"विहितं हि सपिंडस्य प्रेतनिर्हरणादिकं । दैवं स्यात्त्वसपिंडस्य तत्रानाथक्रिया विनेति ॥"

**याज्ञवल्क्यः ( प्रा. २६ )**

"ब्राह्मणेनानुगंतव्यो न शूद्रो न द्विजः क्वचित् । अनुगम्याम्भसि स्नात्वा स्पृष्ट्वाऽग्निं घृतभुक् शुचिरिति "॥

**मनुः ( अ. ५ श्लो. १०३ )**

"अनुगम्येच्छया प्रेतं ज्ञातिमज्ञातिमेव वा । स्नात्वा सचैलः स्पृष्ट्वाऽग्निं घृतं प्राश्य विशुद्ध्यतीति ॥" ३०

---

* वधलयनय-पुस्तकेषु । २ झ-गोपयति । ३ झ-तद्भोजने । ४ झ-त्तत्र । ५ ङ-विशेष । ६ झ-तु ७ । झध-त्तत्र ।

ज्ञातिः सजातीयमात्रं न तु सपिंडः । तदनुगमने दोषाभावात् । इदं च घृतप्राशनं कृच्छ्रेष्वपाठेन तत्वाभावेऽपि तप आत्मकप्रायश्चित्तत्वात् भोजननिवर्त्तकं । स्वानंतरहीनवर्णानुयाने एकाहं प्रकृत्य वसिष्ठः ( अ. २३ सू. २६ ) " शवानुगमने चैवमिति "। " विप्रस्य वैश्यानुयाने तु पक्षिणीति " विज्ञानेश्वरादयः ( पृ. १८४ पं. १८ )। पराशरस्तु
५ ( ३ आ. का० श्लो. ४४ )

"मृत तु वैश्यमज्ञानात् ब्राह्मणो योऽनुगच्छति। कृत्वा शौचं द्विरात्रं स प्राणायामान् षडाचरेदिति॥"

एतदेव क्षत्रियस्य शूद्रानुयानेऽपीति ग्रंथकृतः । तथैव दशश्लोक्यामपि। पराशर ( अ. १ ३ ४५, ४६ )

" प्रेतीभूतं तु यः शूद्रं ब्राह्मणो ज्ञानदुर्बलः । अनुगच्छेन्नीयमानं स त्रिरात्रेण शुद्ध्यति॥

१० " त्रिरात्रे तु ततस्तीर्णे नदीं गत्वा समुद्रगां। प्राणायामशतं कृत्वा घृतं प्राश्य विशुद्ध्यतीति॥"

ज्ञानदुर्बलः ज्ञानशून्य. । एवमज्ञानादित्यत्रापि । ब्राह्मे

"ब्राह्मणस्त्वन्यवर्णानां न करोति कदाचन । कामान्मोहाद्भयाल्लोभात्कृत्वा तज्जातितां व्रजेदिति॥" ब्राह्मणपदमुपलक्षणं । वर्णानामिति सामान्यतो ग्रहणमपि हीनजातिपरमेव । तत्प्रायश्चित्तरेवाभिहितत्वात् । कामादिग्रहणाच्च । धर्मार्थं द्विजस्य द्विजन्क्रियायां न दोष इति गम्यते । शुन पुच्छः

१५ " शालिना सक्तुभिर्वाऽपि शाकेनाऽप्यथ निर्वपेत्। प्रथमेऽहनि यद्द्रव्य तदेव स्याद्दशाहिकं॥"

भविष्योत्तरे

" गृहद्वारे श्मशाने च तीर्थे देवगृहे तथा। यत्राद्यो दीयते पिंडस्तत्र सर्वं समापयेत्॥"

निगमे

" एकस्तोयाजलिस्त्वेवं पात्रमेकं च दीयते। द्वितीये द्वौ तृतीये त्रींश्चतुर्थे चतुरस्तथा॥

२० " पंचमे पंच षट् षष्ठे सप्तमे सप्त एव हि। अष्टमेऽष्टौ च नवमे नवैव दशमे दश॥

"येन स्युः पंचपंचाशत् तोयस्यांजलयः क्रमात्। तोयपात्राणि तावंति संयुक्तानि तिलादिभिः॥

" पंचभिः पंचभिस्त्वेति पात्रैरजलिभिस्तथा। एकादशेंद्रियाणि कल्पंते शास्त्रदर्शनादिति॥"

पिंडश्च पुराणे

" तिला. क्षीरं तथा तोयं धूपं दीपं तथा बलिः । मधु सर्पिः समायुक्त पिंडमाहुर्मनीषिणः॥"इति॥

२५ तथा

"अर्घ्यं पुष्पैस्तथा धूपैर्दीपैस्तोयैश्च शीतलैः। ऊर्णातंतुमयैः शुद्धैर्वासोभिः पिंडमर्चयेदिति"॥ स्मृत्यतरेऽपि। " भूमौ पिंडप्रदानं च कर्षूं कृत्वा विधानतः " इति। कर्षूस्तु प्रादेशमात्रदीर्घा चतुरंगुलविस्तारा तावदेव निम्ना गर्तस्वरूपा ।

अस्थिसंचयने संवर्त्तः

३० " प्रथमेऽन्हि तृतीये वा सप्तमे नवमे तथा। अस्थिसंचयनं कार्यं दिने तद्गोत्रजैः सह "। क्वचित् द्वितीयेऽप्युक्तं। वैष्णवे ( ३।१३१४ ) तु " चतुर्थे दिवसेऽस्थिसंचयनं कुर्यात्तेषां च गंगांभसि प्रक्षेप " इति॥

१ क–स च। २ क–र्थं।

प्रक्षेपो यथा

"पट्टवस्त्रं कौशेयं मांजिष्ठश्वेतवस्त्रकंबलशाणपट्टाजिनैरष्टभिरुपर्युपरि संवेष्ट्य पंचगव्येन प्रक्षाल्य सास्थिर्देश स्नानानि कृत्वाऽस्थीनि पलाशपत्रपुटे संस्थाप्य पुनर्मधुघृततिलहेमशकलैः सह मृत्पिंडे निधाय कृतापसव्यो नाभिमात्रे जले मृतनामगोत्राद्युल्लेखपूर्वकं मृतश्राद्धपूर्वकं च प्रक्षिप्य रजतं ब्राह्मणाय दद्यात् । एवं गंगायां तत्क्षेपे स्वर्गः । प्रयागादौ तु मुक्तिरधीति फलं ।" ५

वपनविषये देवलः

"दशमेऽहनि संप्राप्ते स्नानं ग्रामाद्बहिर्भवेत् । तत्र त्याज्यानि वासांसि केशश्मश्रुनखानि तु॥" वपनादि च दशमपिंडदानोत्तरं । "समाप्य दशमं पिंडं यथाशास्त्रमुदाहृतमिति" ब्रह्मपुराणात् । "भौमार्कमंदवारमलिम्लुचशुक्रास्तादौ गंगायामस्थिप्रक्षेपं न कुर्यादिति" त्रिस्थलीसेतौ ।

"अस्थिक्षेपं गयाश्राद्धं श्राद्धं चापरपाक्षिकं । प्रथमेऽब्दे न कुर्वीत कृते पितृसपिंडने"॥ १०

'यदि न स्यात्सपिंडनमिति' क्वचित्पाठः ।

"अस्थिक्षेपं गयाश्राद्धं श्राद्धं चापरपाक्षिकं । प्रथमेऽब्देऽपि कुर्वीत यदि स्याद्भक्तिमान् सुतः"॥ इति । दर्शश्राद्धं गयाश्राद्ध इति क्वचित्पाठः । अत्र पुत्र इत्येवोद्देश्य समर्थकं । भक्तिस्तु कर्मांगतया प्राप्तोऽनूद्यते । अतः सुतेनाद्याब्द कार्यं नान्येन । स्मृत्यंतरेऽपि

"द्वितीयेऽन्हि प्रकर्तव्यं क्षौरकर्म प्रयत्नतः । तृतीये पंचमे वाऽपि सप्तमे वा प्रदानतः॥" इति॥ १५

ऐकादशाहिकश्राद्धप्रदानात्प्रागित्यर्थः । आपस्तंबः ( १।३।१०।६ ) "अनुभाविनां च परिवापनमिति"। अनुभाविनः कनिष्ठाः सर्वे सपिंडा पुत्रा एवेति मिताक्षरायां ( पृ.१७१।पं४ )।

अनुपनीतपुत्रपत्न्योर्दाहाधिकारमाह कात्यायनः

"असंस्कृतेन पत्न्या च साग्निदानं समंत्रकं । कर्तव्यमितरत्सर्वं कारयेदन्यमेव हि"॥ २०

कृतचौलस्तृतीयवर्षोत्तरं सर्वमौर्ध्वदैहिकं कुर्यात् ।

"अनुपेतोऽपि कुर्वीत मंत्रवत्पैतृमेधिकं । यद्यसौ कृतचूडः स्याद्यदि च स्यात्त्रिवत्सरः॥"

इति सुमंतुक्ते । अत्र विशेषणद्वयमपि विवक्षितं । विधेयकर्तृगतत्वात् ।

षट्पिंडा अपि स्मृत्यंतरे

"स्थाने मार्गेऽर्धपथेऽतीते चितायां शवहस्तके । श्मशानवासिभूतेभ्यः पंचमं प्रातिवेश्मकं॥

"षष्ठः संचयने प्रोक्तो दशपिंडा दशाहिका । श्राद्धषोडशकं चैतत्प्रथमं परिकीर्तितमिति"॥ २५

प्रातिवेशिको द्वारदेशस्थ । कर्मप्रदीपेऽपि

"उत्क्रांतौ द्वारदेशे च विश्रांतौ शवहस्तके । स्तंभे संचयने चापि षट्सु पिंडान्निर्वपेदिति"॥

स्तंभश्चिता । कुशमुष्टिरित्यन्ये । ब्रह्मपुराणे

"क्रिमी वा दग्धदेहो वा श्वापदैर्भक्षितोऽपि वा । अंगमुत्पादयेत्तेषां पिंडदानैर्दशाहिकैः॥

"आतिवाहिकदेहस्तु प्रेतपीडासमन्वितः । न हि मोक्षमवाप्नोति पिंडांस्तैर्नैव सोऽश्नुते"॥ ३०

आतिवाहिकदेहः प्रेतशरीरं ।

---

१ क-थे न । २ अनपत्कधसमद्दल-पशिकं । ३ ख-च्यते । ४ ख-थं ।

" कृते सपिंडीकरणे ततः संवत्सरात्परं । प्रेतदेहं समुत्सृज्य भोगदेहं प्रपद्यते ॥
" शिरस्त्वाद्येन पिंडेन प्रेतस्य क्रियते तथा । द्वितीयेन तु कर्णाक्षिनासिकास्तु समासतः ॥
" गलांस्य भुजवक्षांसि तृतीयेन तथा क्रमात् । चतुर्थेन तु पिंडेन नाभिलिंगगुदानि च ॥
" ऊरूजंघे तथा पादौ पंचमेन तु सर्वदा । सर्वमर्माणि षष्ठेन सप्तमेन तु नाडयः ॥
५ " दंतलोमान्यष्टमेन पूर्णत्वं क्षुद्विपर्ययः । जायते नवमेनाथ दशमेन तथा क्रमादिति ॥"

वृद्धवसिष्ठः

"अलब्ध्वा तु नवश्राद्धं प्रेतत्वान्न विमुच्यते । अर्वाक्तु द्वादशाहस्य लब्ध्वा तरति दुष्कृतमिति ।"॥

अंगिराः

" प्रथमेऽन्हि तृतीयेऽन्हि पंचमे सप्तमे तथा । नवमैकादशे चैव नवश्राद्धं तदुच्यते " ॥

१० नागरखंडे

" त्रीणि संचयनस्यार्थं तानि वै शृणु सांप्रतं । यत्र स्थाने भवेन्मृत्युस्तत्र श्राद्धं प्रकल्पयेत् ॥
" एकोद्दिष्टं ततो मार्गे विश्रामो यत्र कारितः । ततः संचयनस्थाने तृतीयं श्राद्धमुच्यते ॥
" पंचमे सप्तमे तद्वदष्टमे नवमे तथा । दशमैकादशे चैव नव श्राद्धानि तानि चेति ॥ "

नवसंख्याकान्युक्तानि भविष्यपुराणे

१५ " नवसप्तविशां राज्ञा नवश्राद्धान्यनुक्रमात् । आद्यंतयोर्वर्णयोस्तु षडित्याहुर्महर्षयः॥" इति ।[1]

बह्वृचपरिशिष्टे

"अनुदकमधूपंचगंधमाल्यविवर्जितं । नवश्राद्धममंत्रं च पिंडोदकविवर्जितं ।" अनुदकमर्घ्य-रहितं । पिंडोदकं प्रत्यवनेजनोदकं । शातातपः

" सूतके मृतके प्राप्ते द्वितीयं मृतकं यदि । पिंडदानं प्रकर्तव्यं द्वयोरसर्गे तथैव च ॥

२० . "आरब्धे प्रेतपिंडे तु मध्ये चेज्जननं भवेत् । तथैवाशौचपिंडांस्तु शेषान्दद्याद्यथाविधीति"॥.

यत्तु स्मृत्यंतरेऽपि

"न हन्यात्सूतकं कर्म द्वादशैकादशाहिकं । शुद्धो वा यदि वाऽशुद्धः कुर्याद्देवाविचारयन्निति ॥"
तन्मूलं मृग्यं । दशाहमध्ये दर्शपाते ऋष्यशृंगः

" आशौचमंतरा दर्शो यदि स्यात्सर्ववर्णिनां । समाप्तिं प्रेततंत्रस्य कुर्यादित्याह गौतमः ॥"

२५ भविष्यपुराणेऽपि

" प्रवृत्ताशौचतंत्रस्तु यदि दर्शः प्रपद्यते । समाप्य चोदकं पिंडान् स्नानमात्रं समाचरेत् ॥ "[2]
अशौचसमाप्तिपर्यंतं प्रत्यहं स्नानमाचरेदित्यर्थः । पैठीनसिरपि

" आद्येद्वावेव कर्तव्याः प्रेतपिंडोदकक्रियाः । द्विदैवे तु कुर्वाणः पुनः शावं समश्नुते " ॥

मातापितृविषये तु गालवः

३० " पित्रोराशौचमध्येऽपि यदि दर्शः समापयेत् । तावत्तेनोत्तरं तंत्रं पर्यवस्येऽग्यहात्परं ॥ "

यत्तु गौतमः

"अंतर्दशाहं दर्शश्चेत्तन्न सर्वं समापयेत् । पित्रोस्तु यावदाशौचं दद्यात्पिंडं जलांजलीनिति " ।[3]

---

१ झ–मर्हिर्तं । २ क–नि । ३ झ पर्यवस्येन्यहात्परमिति ॥

त्र्यहांतर्दर्शपरं इति पितामहचरणाः । कालादर्शेऽप्येवं । यत्तु मदनो गौतमीय मौरसपुत्रपरं गालवं त्वनौरसपरमिति तन्न । वैपरीत्यस्यापि संभवेन विनिगमनाविरहात् । यदपि स एव माधवनिर्णयामृतकारो च गालवमापद्विषयमाहतुः तदपि न । मानाभावात् । त्र्यहमध्ये आपदि तदुत्तरं च तदभावे गौतमीयस्यापद्विषयतया वैपरीत्यस्यापि सुवचत्वेन विनिगमनाविरहादवस्थात् । मत्स्यपुराणे ५

" दशाहानंतरं पुत्रो वृषोत्सर्गस्य पूर्वकं । आरम्भेत शुचिर्भूत्वा श्राद्धमेकादशेऽहनि ॥"
वृषोत्सर्गं कृत्वेत्यर्थः । वृषोत्सर्गप्रयोगस्तु श्राद्धमयूख उक्तः । स्त्रीविषये

" पतिपुत्रवती नारी भर्तुरग्रं मृता यदि । वृषोत्सर्गं न कुर्वीत गां तु दद्यात्पयस्विनीमिति"॥
विशेषः । वृषोत्सर्गादपि पूर्वं विष्णुतर्पणमुक्तं गारुडे

" पूर्वं तु तर्पणं कार्यं मंत्रैः पौराणवैदिकैः । सर्वौषध्यक्षतैर्मिश्रं विष्णुमुद्दिश्य तर्पयेत् ॥ १०
" कार्यं पुरुषसूक्तेन मंत्रैरपि च वैष्णवैः । दक्षिणाभिमुखो भूत्वा प्रेतं विष्णुमिति स्मरन् ॥
" अनादिनिधनो देवः शंखचक्रगदाधरः । अव्ययः पुंडरीकाक्षः प्रेतमुक्तिप्रदो भवेति ॥ "

**पैठीनसिः**

" एकादशेऽन्हि यच्छ्राद्धं तत्सामान्यमुदाहृतं । चतुर्णामपि वर्णानां सूतकं तु पृथक् पृथक् ॥"
**निर्णयसिंधौ शातातपः** १५

" अन्तर्दशाहे मरणात्पश्चात्स्यान्मरणं यदि । प्रेतमुद्दिश्य कर्तव्यं पिंडदानं यथाविधि ॥ "
पातुः पक्षिणीमध्ये पितुरेकादशाहं च कुर्यात् । लौगाक्षिः

" आद्यं श्राद्धमशुद्धोऽपि कुर्यादेकादशेऽहनि । कर्तुस्तात्कालिकी शुद्धिरशुद्धः पुनरेव सः ॥"
आद्यं श्राद्धमिति सैकोद्दिष्टमकृतिभूतं । याज्ञवल्क्योऽपि ( आ० २५६ )

" मृतेऽहनि तु कर्तव्यं प्रतिमासं तु वत्सरं । प्रतिसंवत्सरं चैवमाद्यमेकादशेऽहनि ॥ " २०
आद्यमेकादशेऽहनीत्यनेनाद्यदिनप्राप्तयोराद्यमासिकाद्यशर्षिकयोरेकादशाह उत्कर्षो विधीयते ।

## अथ मृताग्निहोत्रप्रकारः

**कारिकासु**

*" मृताग्निहोत्रं होतव्यं प्रागदाहात्तत्र कथ्यते । प्राचीनावीतिना सर्वं शंस्यमेवोद्धोत्सर्वे ।"*
शंस्य आहवनीयः ।

" सादनामावतः कूर्चस्थापनं न भवेदिह । प्रागग्रैर्दक्षिणाग्रैश्च तृणैः शंस्य परिस्तृतिः ॥ २५
" पर्युक्षणं च तस्यैव कार्यमंत्रामदक्षिणं । न कुर्याद्दक्षिणतो मस्य निरुप्योष्णं च संधिनीं ॥
" दुग्धं भस्मन्यधिश्रित्यावज्येतासेकवर्जितं । उद्वासयेत्तदासाद्य दक्षिणा स्रुक्स्रुवं ततः ॥
" प्रतीप्य प्रैषरहितं तत्पयः सकृदुन्नयेत् । धारयेत्समिधं स्वधो नर्प्य दक्षिणतो भवेत् ॥
" तूष्णीं समिधमाधाय सव्यं जानु निपात्य च । अपसव्यं स्रुचं कृत्वा सकृत्सर्वं विनिक्षिपेत् ॥
" ततः कृष्णाजिनेऽस्थीनि पुरुषाकारवन्न्यसेत् । ऊर्णाभिश्छादयेत्तानि मृतेनाभ्यज्य पूर्ववत् ॥ ३०

---

* ल-पाठः । १ ग-चोत्, घ-वरे । २ ग-त्वा । ३अकाई-दुग्ध । ३ ल-ज्जत्य, जई-ज्येता—
४ ग-तप्य ।

" पात्राणि योजयित्वा तं दहेत्रेताग्निभिस्ततः ॥ " इति । इदं च मृताग्निहोत्रे देशांतरात् मृतकलेवरागमनानन्तरं हुत्वा कलेवरं दग्धव्यमिति केचित् । अन्ये तु प्राकृताग्निहोत्रस्थाने मृताग्निहोत्रस्य श्रुत्यादावुपदिष्टत्वात् कलेवरस्याहृयां वा गृहगमनपर्यंतं प्रतिदिनं सायंप्रातर्यथोपदिष्टं होतव्यमिति वदंति । दाहे यद्यपि " आहिताग्निमग्निभिर्दहंति यज्ञपात्रैश्च " त्यविशेषेणाग्नयः श्रुतास्तथापि " तयोर्यः पूर्वं म्रियते तस्य त्रेतायां पितृमेधः संपद्यते " इति सूत्रात्

५

" आहिताग्न्योश्च दंपत्योर्यश्चादौ म्रियते शुचिः । तस्य देहः सपिंडैस्तु दग्धव्यस्त्रिभिराग्निभिरिति ॥"

" पश्चान्मृतस्य देहस्तु दग्धव्यो लौकिकाग्निना । अनाहिताग्निदेहस्तु दाह्यो गृह्याग्निना द्विजैरिति ॥ ब्रह्मपुराणवचनात्त्रेताया एव दाहसाधनता न सभ्यावसथ्ययोः । सभ्यावसथ्या वाहिताग्नेर्दहनकर्मणि न प्रयुज्येते । " चिताप्रदेशात्प्रागुदीच्यां दिशि पंच प्रक्रमानतिक्रम्योत्सृजतीति "

१० शाक्यायनिवचनात् ।

स्त्रीमरणे छंदोगपरिशिष्टे विशेषः

" अनयैवावृता नारी दग्धव्याऽपि व्यवस्थिता । अग्निप्रदानमंत्रोऽस्या न प्रयोज्य इति स्थितिः ॥" व्यवस्थिता साध्वी । आवृत्प्रकारः । असाध्वी तु केवलाग्निभिः । पात्राणि तु चितेरुत्तरतः समीपे तदग्न्येकदेशेन पृथग्दग्धव्यानि । अतिनिंदिता तु केवलाग्निभिरपि न दग्धव्येति तट्टीका ॥

१५ एवं अनेकभार्यस्य ज्येष्ठायां जीवंत्यां सहाहिताग्निर्द्वितीया तृतीयाऽपि स्त्री गार्हपत्यैकदेशेन त्रिभिर्वाऽग्निभिर्दग्धव्या

" तस्मात्त्र्यैकदेशेन दग्धव्या पूर्वमारिणी । पत्नी ज्येष्ठेतरा वाऽपि यज्ञपार्श्वे निरूपितं ॥ " तथा " स्त्रीमात्रमविशेषेण दग्धव्यं वैदिकाग्निभिरि " त्युभयथा वचनसद्भावात् वैदिकाग्निदाहपक्षे च ततो ज्येष्ठया सह पुनराधानं । आधानोत्तरकाले या विवाहिता स्त्री सा तु वैदिकाग्निभिर्न दग्धव्या । किंतु गार्हपत्यैकदेशेनेति केचित् । परे तु स्मार्ताग्निसत्वे तेन तदभावे

२० लौकिकेनेत्याहुः । विशेषमाह मंडन

" अप्यारण्योरारूढे प्रमीयेत पतिर्यदि । प्रेतं स्पृष्ट्वा मथित्वाऽग्निं जप्त्वा चोपावरोहण ॥ " घृतं च द्वादशोपात्तं तूष्णीं हुत्वा शवक्रियां ॥ " " उपावरोह जातवेद इमं प्रेतं स्वर्गाय लोकाय नय प्रेताहुती चात्यजुष स्वाहे " त्युपावरोहणमंत्रः ॥

२५ अग्निनाशे यजमानमृतौ कारिकायां विशेषः

" अग्निनाशे मृतिश्चेत्स्यादाहिताग्नेस्तदोच्यते । नष्टोल्मुकं माथतेनैव संस्कुर्यात्तदभावतः ॥ " तद्दर्भरपृष्टकाष्ठेन मथित्वा निर्दहेच्च तं । नष्टेष्वग्निष्वथारण्योर्नाशे स्वामी म्रियेत चेत् ॥ " आहरेदरणी द्वंद्वमाधानोक्तं च तद्यथा ॥ "

अथ विछिन्नाग्नेरुत्सृष्टाग्नेश्चाधानमाह मंडनः

३० " विछिन्नमग्निमुत्सृष्टपावकं विधुरानलं । आहिताग्नि मृतं दग्धुं त्रेताग्न्युत्पत्तिसिद्धये ॥ " भारद्वाजादयः प्राहुः प्रेताधानविधिं पृथक् ॥

---

१ ब-दातव्यग्निभिरग्नि. । २ द्वअई-गार्ग्यायनि, ल-शान्तातप । ३ द-भिर्दग्धव्या । ४द-पृष्ट ५ द-चरेत् ।



"प्राचीनावीतवान् कुर्यादग्न्यागारे तथा स्वरान् ।
" तत्राग्नीनां च संस्कृत्यै प्रेतं स्वाम्यासने क्षिपेत् । नर्यालयेऽरणी स्थाप्य मंथयस्वेति मंत्रतः॥
" यस्याग्रयो जुव्हतो मां सकामः संकल्पयंतु ते यजमानं ।
" ध्यायंतु ते हविषे सादिताय स्वर्गं लोकमिमं प्रेतं नयंत्विति " मंथनमंत्रः ।
" तूष्णीमुध्दृत्य शंस्याग्निं संस्कृतेन च सर्पिषा। शंस्ये हुत्वा स्रुवा तूष्णीं गृहीत्वा द्वादश स्रुवान्॥ ५
" दक्षिणाग्निं समुध्दृत्य निर्दिहेत्पूर्ववच्छवं "॥ उत्सन्नाग्नेररणिसद्भावे एवं । अरण्योरभावे तु
" उत्सन्नाग्नेर्मृतस्याथ न स्तः पूर्वे यदारणी । आनीयान्ये तयोः प्रेतपाणिं स्थाप्याथ दक्षिणं॥
" अयं त इति पुनादिः समारोप्य यजुर्जपेत् । मृतगन्याधानवत्सर्वं कृत्वा तं पूर्ववद्दहेत् ॥

" अनाहिताग्नेरप्येवं मृताधानं यथोदितं "॥ अनाहिताग्नेरिति तु स्मार्ताग्निकातीयादि-पर । तेषां स्मार्त्ताधानाम्नानात् । यदि मृते भर्तरि भार्या म्रियेत तदाऽरणी संपाद्य मंत्रवदग्निं १० निर्मथ्य तेनाग्निना पात्रैर्विना दाहः । एवं भार्यामरणोत्तरकाल मृतस्य पुंसो निर्मंथ्येनैव दाह इति कात्यायनानुसारिणः

## अथ प्रेतक्रियायां निषिद्धकालः

तत्र गार्ग्यः

" प्रत्यक्षशवसत्कारे दिनं नैव विशोधयेत् । आशौचमध्ये क्रियते पुनःसंस्कारकर्म चेत्॥ १५
" शोधनीयं दिनं तत्र यथासंभवमेव तु । आशौचविनिवृत्तौ च पुनः संक्रियते मृतः ॥
" संशोध्यैव दिनं ग्राह्यं ऊर्ध्वं संवत्सरादपि । प्रेतकार्याणि कुर्वीत श्रेष्ठं तत्रोत्तरायणम् ॥
" कृष्णपक्षस्तु तत्रापि वर्जयेच्च दिनक्षयम् " ॥ इति ।

प्रेतश्राद्धं प्रकृत्य गार्गिः

" नंदायां भार्गवदिने चतुर्दश्यां त्रिपुष्करे । तत्र श्राद्धं न कुर्वीत गृही पुत्रधनक्षयात् ॥" २०

त्रिपुष्करयोगश्च रत्नमालायामुक्तः

" विषमचरणे...भद्रातिथिर्यदि जायते । सुरगुरुशनिक्ष्मापुत्राणां कथंचन वासरे ॥
" मुनिभिरुदितः सोऽयं योगस्त्रिपुष्करसंज्ञितस्त्रिगुणफलदो वृद्धौ नष्टे हृते च मृतेऽपि वा ॥ "

प्रेतक्रियां प्रकृत्य महाभारते

" नक्षत्रेण न कुर्वीत यस्मिञ्जातो भवेन्नरः । न प्रौष्ठपदयोः कार्यं नं चाग्नेये च भारत ॥ " २५

ज्योतिःपराशरः

"साधारणे ध्रुवेऽप्युग्रे मैत्रे नो शस्यते मनुष्याणां । प्रेतक्रियां कथंचित्त्रिपुष्करे यमदधिष्ण्ये च॥"

साधारणे कृत्तिकाविशाखे । ध्रुवाणि उत्तरात्रयं रोहिणी । उग्राणि पूर्वात्रयं भरणी मघा च । मैत्राणि मृगचित्रानुराधारेवत्य । यमदधिष्ण्यं धनिष्ठा ।

वाराहपुराणे　　३०

" चतुर्थाष्टमगे चंद्रे द्वादशे च विवर्जयेत् । प्रेतकृत्यं व्यतीपाते वैधृते परिघे तथा ॥

---

१ ल—रे । २ घधफट—पठ । ३ ल—गार्ग्य. । ४ पुधघ—नत्रा ।

" करणे विष्टिसंज्ञे च शनैश्चरदिनेऽपि च । त्रयोदश्या विशेषेण जन्मतारात्रये तथा ॥ "
जन्मतारात्रय मघादशमैकोनविंशानि नक्षत्राणि ।
कश्यप

" भरण्यार्द्रा मघाऽऽश्लेषा मूलं त्रिचरणानि च । प्रेतकृत्येऽतिदुष्टानि धनिष्ठाय च पञ्चकम् ॥
५ " फल्गुनीद्वितय रोहिण्यनुराधा पुनर्वसु । द्वे आषाढे विशाखा च मानि द्विचरणानि च ॥
" एतानि किंचिद्दुष्टानि वर्जयेत्सति संभवे ॥ " इति ।
यदा षोडशश्राद्धानि एकादशाहादिषु स्वस्वकालेषु क्रियते तदा नदादिक न वर्जनीयमित्याह गोभिल.

"नदाया शुक्रवारे च चतुर्दश्यां त्रिजन्मसु । एकादशाहप्रभृति नैकोद्दिष्ट निषिध्यते ॥ " इति ।
१० प्रेतक्रियायामुपस्थिताया दैवाद्युगादिप्रभृतीनामुपनिपाते दिनशोधन विनैव तत्र प्रेतक्रिया कार्या ।
तथा च स्मृत्यतरे

" युगमन्वादिसक्रान्तिदर्शे प्रेतक्रिया यदि । दैवादापतिता तत्र न नक्षत्रादिशोधन " ॥

इति प्रेतक्रियायां निषिद्धकाला ।

अथ प्रोषितमरणे विशेषमाह मदनरत्ने वृद्धमनु

१५ "प्रोषितस्य तथा कालो गतश्चेवद्द्वादशाब्दिक । प्राप्ते त्रयोदशे वर्षे प्रेतकार्याणि कारयेत् ॥ "
" पितरि प्रोषिते यस्य न वार्ता नैव वा गति । तस्य पूर्ववयस्कस्य विंशत्यब्दोर्ध्वत क्रिया ॥
" उर्ध्वं पञ्चदशाब्दा तु मध्यमे वयसि स्मृता । द्वादशाद्वत्सरादूर्ध्वमुत्तरे वयसि स्मृता ॥
" चान्द्रायणत्रय कृत्वा त्रिंशत्कृच्छ्राणि वा सुते । कुशै प्रतिकृतिं तस्य दग्ध्वाऽऽशौचा-
२० दिका क्रिया " ॥ इति ।

कार्या इति शेष । कुशैरित्यस्थ्रामप्युपलक्षण । छन्दोगपरिशिष्टे

"विदेशमरणेऽस्थीनि आहृत्याभ्यज्य सर्पिषा । दाहयेद्दर्णाऽऽच्छाद्य पात्रन्यासादि पूर्ववत् ॥
"अस्थ्नामलाभे पर्णानि शकलान्युक्तया वृता । दाहयेदस्थिसख्यानि तत प्रभृति सूतकम् ॥ " इति ।[1]
अनाहिताग्नेस्तु विशेषो ब्राह्मे

२५ " अनाहिताग्नेर्देहस्तु दाह्यो गृह्याग्निना द्विजे । तदभावे पलाशाना वृते कार्य पुमानपि ॥
" शवेऽस्त्रिमि षष्ठ्यधिकै शरेवृतैर्विधानत[2] । वेष्टितव्यस्तथा यत्नात्कृष्णसारस्य चर्मणा ॥
" ऊर्णासूत्रेषु बध्वा [3] मलेप्तव्यो यवैस्तथा । सर्पिर्जलसमिश्रैर्दग्धव्यश्च तथाऽग्निना ॥
" असौ स्वर्गाय लोकाय स्वाहेत्युक्त्वा सबांधवे । एव पर्णशर दग्ध्वा त्रिरात्रमशुचिर्भवेत् ॥ " इति ।
पर्णशर पर्ण पलाशस्तस्य शर । पर्णत्रयवृत्तं तत्प्रतिरूपकमित्यर्थ ।

३० इद च त्रिरात्र दशाहादिसपूर्णाशौचकालानतर कार्यं । दशाहमध्ये तु तच्छेषेणैव ।
आहिताग्नेरतीतसस्कारे दाहदिनात्सर्वथा सपिण्डादीनां सपूर्णमेव । अनाहिताग्नेस्त्वतीतेऽन्त्यसस्कारे पत्नीपुत्रयोरगृहीताशौचयो कर्माधिकारिणोस्त्रिरात्र । तथा च गृह्यपरिशिष्टे ( अ ३।१३ )
"अथातीतसस्कार । स चेद्दतर्दशाह स्यात्तत्रैव सर्वं समापयेदूर्ध्वमाहिताग्नेर्दाहात्सर्वमाशौच कुर्या-

---

१ वधप—तया । २ ख—र्भ । ३ ख—+हे । ४ + भविष्यत्पुराणे (?) ।

गृहीताशौचयो॰ कर्माण त्रिरात्रम्" इति । मरणसंदेहे अगृहीताशौचत्व मरणा (? ण) निश्चये गृहीताशौचत्व बोध्यम् ।

अत्र केचित्—पत्नीपुत्रग्रहणात् "दग्ध्वेति" क्त्वाप्रत्ययाद्दाहकर्तृमात्रविषयत्वेन प्रतीयमानस्यापि त्रिरात्रस्य समानकर्तृकाविवक्षया पत्नीपुत्रविषयत्व कल्पनीयमित्याहु । तन्न । गृह्यपरिशिष्ट कर्मांगत्वेनैव त्रिरात्रविधानाद्दाहकर्तुरेव त्रिरात्र प्रतीयते । तेन दग्ध्वेति क्त्वाप्रत्ययोक्तसमान- ५ कर्तृकत्वाविवक्षैव युक्ता । पत्नीपुत्रग्रहण तु कर्तृमात्रोपलक्षण । अत एव विश्वादर्शे "प्रतिकृतिदहने त्वग्निदे स्यात्त्रिरात्रम्" इत्युक्तम् । अन्यथा मरणनिश्चये पुत्राभावे कृताशौचाया अपि पत्न्या पुन संस्कारे त्रिरात्र पौत्रादेर्दाह कर्तुं शौचमिति सकलशिष्टाचारविरुद्ध चापद्येत । यत्तु मम त्वेव प्रतिमार्तास्त्यादिना गृह्यपरिशिष्टानाश्वासपक्षे गृहीताशौचानां वा पुत्रादीनां सपिडाना त्रिरात्रमाशौचमित्युक्त तदप्ययुक्त । "पितरौ चेत्" इत्यनेन पुत्राणां दशरात्रविधानात् । यद्यपि १० चेद् पर्णशरदाहातिरिक्ते सावकाश पर्णशरदाहनिमित्त च त्रिरात्र पुत्रातिरिक्तसपिडानां सावकाशमिति न परस्पर बाध्यबाधकभावे विनिगमकमस्ति तथापि त्रिरात्रसमुच्चित दशरात्र कार्य । समुच्चयस्तु दशाहेन त्रिरात्रस्य प्रसग सिद्ध एव । एव च शिष्टाचारोऽप्यनुगुणीभवतीति । अगृहीताशौचाना सपिंडानामपि त्रिरात्र । तदाहांगिरा

"देशातरमृत श्रुत्वा नाशौच चेत्कथचन । कालात्ययेऽपि कुर्वीत दाहकाले दिनत्रय ॥" १५

समानदेशे त्वगृहीताशौचाना सपिंडानां स्वाशौचकालोत्तरत्वमात्रनिर्णये "मासत्रय त्रिरात्र स्यात्" इत्यादिना कालविशेषे विहितस्य त्रिरात्रैर्मासंसख्याविशेषाज्ञानादप्राप्तावपि प्रथमोपस्थित त्रिरात्रमेव कार्य । स्वाशौचकालोत्तरत्वानिश्चये दशाहांतर्गतदिनविशेषजातत्वनिश्चये यच्छेषमित्येव । दिनविशेषानिश्चये तु शेषरूपापवादप्रवृत्त्या दाहरूपोत्सर्गस्यैव प्रवृत्ति । गृहीताशौचानां स्नानमात्रमिति । अमुकमेवार्थप्राय स्मृत्यर्थसारकार सजग्राह । गृहीताशौचस्य पुत्रस्य २० पत्न्याश्च त्रिरात्र । पत्नीपुन संस्कारे पत्युरेव । अगृहीताशौचाना सपिंडाना त्रिरात्र । गृहीताशौचाना स्नानमात्रमिति दिक् ।

## अथ पलाशप्रतिकृति

तत्र कल्पतरौ

"अस्थीनि चेन्न लभ्यते प्रोषितस्याग्निहोत्रिण । पलाशपत्रवृंताना षष्ट्याधिकशतत्रय ॥ २५

"कृष्णाजिने नराकार कृत्वा वेष्ट्याजिनेन त । ऊर्णासूत्रेण बध्नैव यवपिष्टे प्रलेपयेत् ॥

"निर्दिश्य देवदत्तोऽय नाम्नेत्याहाश्वलायन । अक्षाऽऽज्येन दहेत्कृत्वा मृद्दिग्ध सचयार्थत "॥इति

मृद्दिग्धमिति यवपिष्टलेपोत्तर मृदाऽप्यालिप्य दग्ध्वाऽस्थ्ना स्थाने तां दग्धा मृद सचिनुयादित्यर्थ । अत्रेत्थ पलाशवृतविभाग ।

"अशीत्यर्द्ध शिर स्थाने ग्रीवाया दश योजयेत् । उरसि त्रिंशत दद्याद्विशति जठरे न्यसेत् ॥ ३०

"बाहुभ्यां तु शत दद्याद्दद्यादगुलिभिर्दश ॥" तृतीया सप्तम्यर्थे ।

"द्वादशार्द्ध वृषणयोरष्टार्द्ध शिश्न एव तु ॥

"ऊरुभ्यां तु शत दद्यात्त्रिंशत जानुजघयो । पादागुलीषु दशधा एतत्प्रेतेषु लक्षणमिति ॥"

---

१ बेल ।

तथा

" नालिकेरं शिरःस्थाने तुंबं दद्याच्च तालुके । पंचरत्नं मुखे दद्याज्जिव्हायां कदलीफलम् ॥
" अंत्रेषु नालकं दद्याद्वालकं घ्राण एव च । वसायां मृत्तिका दद्याद्गोमूत्रेण तु मूत्रकं ॥
" गंधकं धातवो देया हरितालं मनःशिला । पारदं रेतसःस्थाने पुरीषे पित्तलं तथा ॥
५ " मनःशिला तथा गात्रे तिलकल्कं च संधिषु । यवपिष्टं तथा मांसे मधु शोणितमेव च ॥
" केशेषु च जटाजूटं त्वचायां च मृगत्वचं । कर्णयोस्तालपत्रं च स्तनयोश्चैव गुंजिका ॥
" नासायां शतपत्रं च कमलं नाभिमंडले । वृंताकं वृषणद्वंद्वे लिंगे स्याद्गर्जरं शुभं ॥
" घृतं नाभ्यां प्रदेयं स्यात्कौपीने च त्रपुः स्मृतं । मौक्तिकं स्तनयोर्मूर्ध्नि कुंकुमेन विलेपनं ॥
" कर्पूरागुरुधूपैश्च शुभैर्माल्यैः सुगंधिभिः । परिधानं पट्टसूत्रं हृदये रुक्मकं तथा ॥
१० " ऋद्धिवृद्धी उभौ द्वौ च चक्षुर्भ्यां च कपर्दकौ । सिंदूरं नेत्रकोणेषु तांबूलाद्युपहारकैः ॥
" सर्वौषधियुतं प्रेतं कृत्वा पूजां यथोदितां । साग्निके चापि विधिना यज्ञपात्रं न्यसेत् क्रमात् ॥
" शिरो मे श्रीः पुनंतु मा ' ' इमंमे वरुणेति ' च । प्रेतस्य पावनं कृत्वा शालग्रामशिलाजलैः ॥
" विष्णुमुद्दिश्य दातव्या सुशीला गौ पयस्विनी । तिला लोहं हिरण्यं च कार्पासं लवणं तथा ॥
" सप्तधान्यं क्षितिर्गौश्च एकैकं पावनं स्मृतं । तिलपात्रं ततो दत्वा पददानं तथैव च ॥
१५ " ततो वैतरणी देया सर्वाभरणभूषिता । कर्तव्यं वैष्णवं श्राद्धं प्रेतमुक्त्यर्थमात्मनि ॥
" प्रेतमोक्षं ततः कुर्याद्धृदि विष्णुं प्रकल्प्य च । ' ॐ ' विष्णुरिति संस्मृत्य प्रेतं तं मृत्युमेव च ॥
" अग्निदाहं ततः कुर्यात्सूतकं च दिनत्रयं ॥ "

इत्थं प्रतिकृतिकरणानंतरं पात्रप्रतिपत्तिविषये कात्यायनः । "केशश्मश्रुलोमनखनिकृंतनानि कृत्वा त्रिपुरीषं चेच्छन् केशादीन्निखाय सर्पिषाऽभ्यंक्त्वा चितावेनमादधाति । कृष्णाजिन-
२० मास्तीर्य प्राक्शिरसं सप्तसु प्राणायतनेषु सप्त हिरण्यशकलान्प्रास्यति मुखे प्रथमं दक्षिणहस्ते जुहूं[१] सादयति घृतपूर्णां स्फ्यं चोपभृतं[२] सव्य उरसि ध्रुवां मुखेऽग्निहोत्रहवणीं नासिकयोः स्रुवौ कर्णयोः प्राशित्रहरणे शिरसि चमसप्रणीताप्रणयनं कपालादि चैके पार्श्वयोः शूर्पे उदरे पात्रीं[३] समवत्तधानीं पृषदाज्यवतीं[४] शिश्ने शम्यामरणी वृषणयोरंतरेणोरू यज्ञपात्राण्यन्यान्यपव-
वहरणं मृन्मयाश्ममयानामयस्मयानि ब्राह्मणाय दद्यादिति"। केशश्मश्रुनखलोमकृंतनादिकं शवस्य ।
२५ प्रतिकृतौ [illegible] लोपः । सप्त प्राणायतनानि मुखनासाक्षिकर्णरंध्राणि । श्रौतपात्रप्रतिपत्तिस्तु एवमेव "आहिताग्नेस्तु पात्रन्यासादिकं भवेदिति" कात्यायोक्तेः । स्मार्तपात्रप्रतिपत्त्यनंतरं कर्त्तव्या स्मार्तानां प्रतिपत्तिस्त्वेवं । दक्षिणशिरसं च शवं चितौ निधाय मुखे हिरण्यं शिरसि चमसं पार्श्वयोः शूर्पे अंटयोररणी उद्गमो । प्रोक्षणीपात्रादीनामंतरेणोरूप्रक्षेपः । चंद्रोगेष्टीकयोश्च । मृन्मयादीनामभावे । ततः शिरःप्रदेशेऽग्निं दत्वा स्रुवेणास्मान्त्वमित्याहुतिं हुत्वा दक्षिणनासिकायां
३० स्रुवं प्रक्षिपेत् । स्फ्यं [illegible] दक्षिणे हस्ते शेषमाहिताग्निवदिति । मृताहाज्ञाने दीपिकायां " अत्र यस्य निधनं चान्यत्र चेज्ज्ञायते ऊर्ध्वं पंचदशाब्दतः प्रतिकृतिं संस्कृत्य तस्याचरेत्तत्त्यं कर्म स एव दाहदिवसः स्यादाह्निके कर्मणीति " । मृताहाज्ञाने तु पैठीनसिः

---

१ ह–नैव देयालकार—। २ अदह्यावधपाठ, ह–चंद्रोगेष्टीकयोश्च ह–चेची मेर त्रिक्योश्च ।

" अनग्निमत उत्क्रान्तेराशौचादिद्विजादिषु। दाहादग्निमतो विद्याद्विदेशस्थे मृते सति॥"

बृहस्पतिः

" न ज्ञायेत मृताहश्चेत्प्रमीते प्रोषिते सति। मासश्चेत्प्रतिविज्ञातस्तद्दर्शे स्यान्मृताहनि॥"

यत्कर्त्तव्यं तदिति शेषः। अत्रैव विषये

" श्राद्धविघ्ने समुत्पन्ने अविज्ञाते मृतेऽहनि। एकादश्यां तु कर्त्तव्यं कृष्णपक्षे विशेषतः॥" ५

इति मरीचिवचनात् " दर्शो वा एकादशी चेति " विकल्पः। पक्षाज्ञाने कृष्णः। एकादशीज्ञाने तु तत्तत्पक्षस्यैवेति विशेषः। " मृताहज्ञाने मासाज्ञाने तु भविष्यपुराणे

' दिनमेव विजानाति मासं नैव तु यो नरः। मार्गशीर्षेऽथ वा भाद्रे माघे वाऽथ समाचरेत्॥"

उभयाज्ञाने तु बृहस्पतिः

"दिनमासौ न विज्ञातौ मरणस्य यदा पुनः। प्रस्थानदिनमासौ तु ग्राह्यौ पूर्वोक्तया दिशेति॥" १०

तदज्ञानेऽपि भविष्योत्तरे " मृतवार्ताश्रुतेर्ग्राह्यौ तौ पूर्वोक्तक्रमेण तिथिः "॥

पूर्वोक्तसर्वाज्ञाने प्रभासखण्डे

" मृताहं यो न जानाति मासं वाऽपि कथंचन। तेन कार्यममावास्या श्राद्धं माघेऽथ मार्गके "॥ इति

अथ धनिष्ठादिपञ्चकमृतौ शान्तिः

' आदौ कृत्वा धनिष्ठार्धमेतन्नक्षत्रपञ्चकम्। रेवत्यन्ते सदा दूष्यमशुभं सर्वदा भवेत्॥ १५

" दाहस्तत्र न कर्तव्यो विप्रादिसर्वजातिषु। दीयते न जलं तत्र अशुभं जायते ध्रुवम् "॥

ज्योतिर्निबन्धादौ

" कुर्यान्न दारुतृणसंग्रहमन्तकाशायानं मृतस्य दहनं गृहगोपनं च।

" शय्यावितानमिह वासवपञ्चकेऽपि तद्वदति परतो वसुदैवतार्धादिति "॥

अन्तकाशायानं दक्षिणदिग्गमनम्। वसुदैवतं धनिष्ठा। २०

" अथवा ऋक्षमध्ये तु दाहश्च विधिपूर्वकः। शवस्य च समीपे तु क्षिप्यन्ते पुत्तलास्ततः॥

" दर्भमयाश्च चत्वारः ऋक्षमन्त्राभिमन्त्रिताः। ततो दाहः प्रकर्तव्यस्तैश्च पुत्तलकैः सह॥

" दर्भाणां प्रतिमा कार्या पञ्चोर्णासूत्रवेष्टिता। यवपिष्टेनानुलिप्तास्ताभिः सह शवं दहेत्॥

" प्रेतवाहः प्रेतसखः प्रेतपः प्रेतभूमिपः। प्रेतहर्ता पञ्चमस्तु नामान्येतान्यनुक्रमात् "॥

तत्रादौ ऋक्षमन्त्रैः पुत्तलानामभिमन्त्रणम्। ततो मृतस्य मुखे पञ्चरत्नप्रक्षेपः। ततः पुत्तलमुखेषु २५

" वहवपा जातवेदः " इतिमन्त्रेणाज्याहुतित्रयं। ततः पुत्तलैः सह दाहः इति। नक्षत्रमन्त्रास्तु

" जमया अन वसवोरतिदेवाः (ऋ ५।४।८) " तत्वायामि ब्रह्मणा " (ऋ १।२।१५) " उत नोऽहिर्बुध्न्यः "( ऋ ४।८।१० ) ' कद्रुद्राय '( १।३।४६ ) ' पूषा गा अन्वेतु '( ४।८।१९ )

" सूतकान्ते तदा पुत्रः कुर्याच्छान्तिकमुत्तमम्। पञ्चकेषु मृता योऽसौ लभते न गतिं नरः॥

" तिलान् गाश्च हिरण्यं च तस्योद्दिश्य घृतं दहेत्। ३०

१ ट-ति। २ कद-विद्यात्। ३ दम-अज्ञायेत, घङ्ग-अज्ञा व—अनज्ञप्ते। ४ ङ्ग—हा।

" भोजनोपानहौ छत्रं हैममुद्रे च वाससी । दक्षिणा दीयते विप्रे सर्वपातकमोचनी ॥
" बालवृद्धस्य यूनश्च पचकेषु मृतस्य हि । विधान यो न कुर्वीत विप्रस्तस्य प्रजापते" ॥ इति ।
अथ रजस्वलापतिमरणे आग्रहेण सह गमनार्थं शुद्धिं न प्रतीक्षेत तदा विशेषो-
ऽत्योष्टिपद्धतौ

५ "यदा स्त्रियामुदक्यायां पति प्राणान् परित्यजेत् । द्रोणमेकं तडुलानामवहन्याद्विशुद्धये ॥
" मुसलाघातैस्तदसृक् स्रवते योनिमण्डलात् । विरजस्का मन्यमाना स्वे चित्ते तदसृक्क्षय ॥
" दृष्ट्वा शौच प्रकुर्वीत पचमृत्तिकया पृथक् । त्रिंशद्विंशति दश च गवा दद्यात्स्वह क्रमात् ॥
"विप्राणा वचनाल्लब्ध्वा समारोहेद्धुताशन । नारीणा सरजस्काणामिय शुद्धिरुदाहृतेति " ॥ ·

तन्मूलं मृग्य ।

१० गारुडे

" गर्भे नष्टे क्रिया नास्ति दुग्ध देयं शिशौ मृत । पर च पायस क्षीर दद्याद्बालविपत्तित ॥
" एकादशद्वादशाहवृषोत्सर्गविधिं विना । महादानविधानं च कुमारे कृत्यमाचरेत् ॥
" भूमिनिक्षेपण बाले आवर्षद्वयमाशिव । तत पर खगश्रेष्ठ दाह कुर्याद्यथाविधि ॥
" शिशुरादतजननाद्बाल स्यायावद्राशिव । कथ्यते सर्वशास्त्रेषु कुमारो मौंजिबंधनात् ॥

१५ " चूडाकर्मणि सजाते विपत्तिस्तु यदा भवेत् । सूतकांते प्रकर्त्तव्य वृषस्योत्सर्जन बुधै ॥
" तत्र दाह प्रकर्त्तव्य उदक तत्र निश्चय ।
" आमौंजी बधनाद्विप्र पचमादिपुचेन्मृत । केचिदुत्सर्गमिच्छंति केचित्पिंडक्रियां ध्रुव ॥
" पचवर्षाधिके बाले विपत्तिर्यदि जायते । वृषोत्सर्गादिकं कर्म कर्त्तव्यमुदक तत ॥
" अहन्यहनि सप्राप्ते कुर्याच्छ्राद्धानि षोडश । पायसेन गुडेनैव पिंड दद्याद्यथाक्रम ॥

२० " व्रतार्चनेव देय तु तत पितृगणस्य च । स्वाहाकारेण वै कुर्यादेकोद्दिष्टानि षोडश ॥
" ऋजुदर्भैस्तिले शुक्ले प्राचीनावीतिनिश्चितम् । अपसव्य च कर्त्तव्य कृते याति परां गतिं ॥
" सुख दु ख सदा वेत्ति देही सर्वगतास्विह । परित्यज्य तदाऽऽत्मानं जीर्णां त्वचमिवोरग ॥
" अगुष्ठमात्र पुरुषो वायुभूत क्षुधार्दित । तस्माद्देयानि दानानि मृते तस्मिंस्तु निश्चित ॥"

एतानि तु गारुडानि वचांसि शिष्टैर्नाद्रियते ॥

२५ **अथ सहगमनविधिः ।**

व्यास

" यदि प्रविष्टो नरक बद्धं पाशै सुदारुणे । सप्राप्तो यातनास्थान गृहीतो यमकिंकरै ॥
"तिष्ठते विवशो दीनो वेष्ट्यमान स्वकर्मभि । व्यालग्राही यथा व्याल बलादुद्धरते बिलात् ॥
" तद्वदुद्धृत्य सा नारी तेनैव सह मोदत " ॥ हारीत

३० " ब्रह्मघ्नो वा कृतघ्नो वा मित्रघ्नो वा भवेत्पति । पुनात्यविधवा नारी तमादाय म्रियेत यति ॥"

स एव

" तिस्र कोट्योऽर्द्धकोटी च यावत्यगरुहाणि वै । ताव यन्दसहस्राणि स्वर्गे लोके महीयते ॥
" मातृक पैतृक चापि यत्र चैव प्रदीयते । कुलत्रय पुनात्येषा भर्त्तारं याऽनुगच्छति ॥

१ द-पुत्रस्य । २ ह्र-रुद । ३ ह्र-विलात । ४ ह्र-चलात ।

" अधिकारस्तु साध्वीनामदुष्टानां च भारत ॥

"अद्य प्रभृति या साध्वी पत्युः प्रियपरायणा । ऊर्ध्वं गच्छति सा तत्र भर्त्राऽनुमरणं गतेति॥"

तथा

" अवमन्य च या पूर्वं पतिं दुष्टेन चेतसा । वर्तते याश्च सततं भर्तॄणां प्रतिकूलतः ॥

"भर्त्रनुमरणं काले याः कुर्वंति यथाविधि । कामात्क्रोधाद्भयान्मोहात्सर्वाः पूता भवंति ताः।" इति । ५

इदं तु वचो भारतादित्रिपुस्तकेषु न दृश्यते । कासाचिदनधिकारोऽपि बृहन्नारदीये बाह्यप्रियां भत्योर्ध्वः

" बालापत्याश्च गर्भिण्यो ह्यदृष्टरजसस्तथा । नारोहंति चितां भ्राज्ञे सत्यमेतद्ब्रवीमि ते ॥" इति ब्राह्मण्या सहगमनेऽनधिकारः । " मृतानुगमनं नास्ति ब्राह्मण्या ब्रह्मशासनादिति " निषेधात् । कल्पतरौ " पृथक्चितिं समारुह्य न विप्रां गंतुमर्हतीति " वचोंतराश्रियेथो भिन्नाचितिपर इति १० विज्ञानेश्वरादयो युक्तमुत्पश्यंति । सार्वजनीने आचारोऽप्यमुमेवं पक्षमनुगृण्हाति । कथं तर्हि देशांतरं दाहे चितिभेदादस्थिभिः पलाशादिप्रतिकृत्या वा सहगमनं । शृणु । चितिशब्दस्य यूपादिशब्दवत् दृष्टादृष्टकूटवोचित्वात् अन्यदेशे काष्ठवद्दाहेऽपि संस्काराभावेन चितिभेदाभावः । देशांतरे मंत्रादिना दाहे तु विप्राया अन्वारोहणं न भवत्येव । क्षत्रियादीनां तु निषेधाभावाद्भवति ।

अथ सहगमनप्रयोगः । मासादि संकीर्त्यास्मनो भर्तुश्चानेकजन्मोपार्जितसर्वपापक्षयपूर्वक- १५ स्वरोमसिताब्दसहस्रावधिभर्तृसाहित्येन स्वर्गवासमातृपितृभर्तृकुलोद्धारकामा भर्त्रनुगमनं करिष्य इति संकल्प्य

" देवैः संपादितो मह्यं पतिस्त्वे सर्वदैवते । त्वया सह गमिष्यामि भर्ता त्वं चान्यजन्मनि।" इत्युक्त्वा स्नात्वा कुसुमकुंकमादिना स्वशरीरमलंकृत्य पुत्रादिभ्यो बंधुभ्यश्चाशिषो दत्वा

" चितिस्थो भगवानग्निर्विष्णुरूपी सनातनः । पतिलोकसमावाप्त्यै गृहाणार्घ्यं नमोऽस्तुते" । २० इति विष्णुरूपिणेऽग्नयेऽर्घं दत्वा ।

" एष चार्घो मया दत्तः सूर्य साक्षी त्वदग्रतः । प्रसादं कुरु मे देव गृहाणार्घ्यं नमोऽस्तु ते "

इति सूर्याय च दत्वा

" त्वं ब्रह्मा त्वं च वै रुद्रस्त्वं रविस्त्वं प्रजापतिः । त्वमिंद्रो वसवश्चाष्टौ परमात्मा त्वमेव हि ॥

" त्वमेव शरणं विष्णो शरणं त्वं पतिर्मम । स्वर्गे वा नरके वाऽपि यत्र यत्र गमिष्यसि ॥ २५

" तत्र तत्र स्वहं पृष्ठे गमिष्यामि तवाशु वै ॥

"ब्रह्महत्यादिभिः पापैस्त्वा मोक्ष्यामि यमालयात् । अहं ब्रह्मा ह्यहं विष्णुरहं सूर्यश्च दिक्पतिः॥

" आदित्यचंद्रावनलोऽनिलोऽथ द्यौर्भूमिरापोऽथ अहर्निशा च ।

" एते च सर्वे मम साहसेन तुष्यंतु ते देववराश्च सर्वे " । इति ।

" पठित्वा हरिद्राकुंकुमाजनकंचुक्यादियुतानि पंचशूर्पाणि सुवासिनीभ्यो दद्यात् । ३०

" लक्ष्मीनारायणौ देवौ बलसत्वगुणाश्रयः । गाढं सत्वं च मे देयाद्वायनैः परितोषितः ॥

---

१ ह्यकद्-जान । २ ब-स्ट ।

"सोपस्कराणि शूर्पाणि वायनैः संयुतानि च। लक्ष्मीनारायणप्रीत्यै सत्वकाम्म ददाम्यहमिति"॥ ततो दाहार्थाग्नेः समीपे गत्वा पंचरत्नानि नीलांजनं च स्ववस्त्रपल्लवे बध्वा मुक्ताफलं स्वमुखे क्षिप्त्वा

"स्वाहासंश्लेषनिर्विण्ण सर्वगोत्रहुताशन। सत्वमार्गप्रदानेन नय मां पत्युरंतिकम्" इत्यग्निं संप्रार्थ्य तत्रैवाज्येन दशाहुतीर्जुहुयात्। अग्नये तेजोधिपतये स्वाहा १ कालाय धर्माधिपतये

५ स्वाहा २ पृथिव्यै लोकाधिष्ठात्र्यै स्वाहा ३ अद्भ्यो रसाधिष्ठात्रीभ्यः[1] ४ वायवे बलाधिपतये ५ आकाशाय सर्वाधिपतये ६ कालाय धर्माधिष्ठात्रे० ७ अद्भ्यः सर्वसाक्षिभ्यः० ८ ब्रह्मणे वेदाधिपतये० ९ रुद्राय श्मशानाधिपतये १० इति। ततः शिलां संपूज्य तामारुह्य फलपुष्पांजलिं गृहीत्वा त्रिरग्निं प्रदक्षिणीकृत्य प्रार्थयेत्।

"त्वमग्ने सर्वभूतानामंतश्चरसि साक्षिवत्। त्वमेव देव जानीषे न विदुर्यानि मानवाः॥

१० "अनुगच्छामि भर्तारं वैधव्यभयपीडिता। सत्वमार्गप्रदानेन नय मां भर्तुरंतिकं॥

"इदं शरीरं सकलं मदीयं दग्ध्वा कृशानो कुरु दिव्यमाशु॥

"तथा च भर्तुः कुरु दिव्यदेहं भर्तुः समीपं भगवन् व्रजामि॥

"किं मया न कृतं साधु भवेयदि च तेऽनघ। इदं शरीरमालिंग्य प्रविशामि हुताशनमिति"॥

ततस्तृणकुटीं प्रविश्य श्रौतं स्मार्तं लौकिकं वाऽग्निमादाय स्वयमेव कुटीं प्रज्वालयेत्।

१५ तस्याः प्राणोत्क्रमणोत्तरं पुत्रादिरधिकारी द्वयोरपि दाहे कुर्यादिति सहगमनविधिः प्रयोगश्च॥

## अथाशौचसंनिपातादौ निर्णयः

तत्र केचित् ज्ञातयोर्जन्ममृत्योर्जन्ममृतिज्ञानस्य वाऽशौचप्रयोजकता न स्वरूपतस्तयोः "निर्दशं ज्ञातिमरणं श्रुत्वा पुत्रस्य जन्म चेति" (मनुस्मृ. ५।७७) लिंगदर्शनात्।

"विगतं तु विदेशस्थं शृणुयाद्यो ह्यनिर्दशं। यच्छेषं दशरात्रस्य तावदेव शुचिर्भवेदिति"

२० (५।७५) मानवानुपपत्तेश्च। स्वरूपतो मरणमात्रस्यैवाशौचप्रयोजकत्वे हि तत एवाशौचप्रवृत्तेर्विनाऽप्येतद्वचनं दशाहशेषेणैव शुद्धिः स्यादित्यनर्थकमेतद्वचः स्यात्। मरणज्ञानस्याज्ञातमरणस्य वा निमित्तत्वे तु ज्ञानप्रभृत्येवाशौचप्राप्तौ तदपवादात्सार्थकमेतद्वच इति निर्द्धारितत्वाच्च मिताक्षरादौ। अहं तु ब्रुवे। आशौचं हि सपिंडजन्मादिकरणको "अशुद्धा बांधवा" इत्यादिवचःप्रतिपादितोऽशुद्ध्याख्यः सपिंडगतः शक्तिरूपः पदार्थः। स च जनना-

२५ द्यनन्तरमेव सपिंडेषूत्पद्यते न ज्ञानमपेक्षते (मनुस्मृ. ५।५९)

"दशाहं शावमाशौचं सपिंडेषु विधीयते। जननेऽप्येवमेव स्यान्निपुणां शुद्धिमिच्छतां॥"

इत्यनेन हि शवसंबंधित्वेन मृतेर्जन्मनश्च निमित्तत्वमुक्तं तदनंतरमेवाशौचोत्पत्तिरविहता सामर्थ्यंतरानपेक्षणत्वात्प्रतिबंधकाभावाच्च। या तु ज्ञानस्य निमित्तत्वोक्तिः सा प्रवर्त्तकनिवर्त्तकविधिनिषेधबोध्याशौचनिमित्तककटशय्यापंचयज्ञादिप्रवृत्तिनिवृत्तिपरा। मरणं श्रुत्वा पुत्रस्य जन्म चे-

३० त्यादिस्नानादिपुरुषव्यापारसमानकर्तृकतायां क्त्वाश्रुतेः। अतो मरणादिज्ञानं विना प्रवृत्तिनिवृत्य-

---

१ ह-रसाधिष्ठात्रिभ्यः।

योगात्कटशय्यासंध्यावंदनादिप्रवृत्तिनिवृत्त्योर्निमित्ततया प्रागेव ज्ञानमनूद्यते । न त्वाशौचनिमित्ततया प्रवृत्तिनिवृत्तिनिमित्ततया वा पूर्वं ज्ञाप्यते । अन्योऽस्तु विधिनिषेधप्रवृत्तिर्शोनात् । आशौचं तु जन्ममरणयोरेव निःपरिपंथि प्रवर्तते । ज्ञानस्य तत्प्रवृत्तिसामग्रीत्वे मानाभावात् । अतोऽज्ञातेपि पूर्वं जाते जननमरणादौ आशौचस्य प्रवृत्तत्वात् एतज्ज्ञानात्प्राक् ज्ञातमप्येतदुत्तरभावि जननं मरणं वा न स्वतंत्रस्वाशौचावधिप्रयोजकं किंतु पूर्वप्रवृत्तजननमरणप्रयुक्तावधिकमेवाशौचमात्रं प्रयुंक्त इति । "अंतरा जन्ममरणे शेषाहोभिर्विशुध्यतीति" याज्ञवल्क्योक्तेः (प्रा. २०)। अल्पकालपूर्वाशौचे बहुकालीनोत्तराशौचपाते तूत्तरशेषेणैव शुद्धिः। "अघवृद्धिमदाशौचं पश्चिमेन समापयेदिति" यमोक्तेः । अघवृद्धिमद्दीर्घकालीनं । बहुकालीनेनापि जन्माशौचशेषेणाल्पकालीनमपि मृताशौचं नापगच्छति ।

"सूतके मृतकं चेत्स्यान्मृतकेऽप्यथ सूतकं । तत्राधिकृत्य मृतकं शौचं कुर्यान्न सूतकम्॥" १० इत्यंगिर उक्तेः । "शावेन शुध्यते सूतिर्न सूतिः शावशोधिनीति" पार्ष्णिग्रहन्मताच्च ।

"मातर्यग्रे प्रमीतायामशुद्धौ म्रियते पिता। पितुः शेषेण शुद्धिः स्यान्मातुः कुर्यात्तु पक्षिणीमिति"॥ मातरि पूर्वं मृताया दशाहमध्ये पिता म्रियते तदा न पूर्वाशौचशेषेण शुद्धिः किंतु पित्राशौचदिनैरेव । पित्राद्याशौचे मातृमृतौ पित्राशौचं समाप्य पक्षिणीमधिकां कुर्यादित्यर्थः । एवं पित्रातिरिक्ताशौचे पित्रोर्मरणे कैमुतिकन्यायात् संपूर्णमेवाशौचं न पूर्वशेषेण शुद्धिः । १५ अत एव षडशीत्यां

[illegible]

अयं [illegible]

शेषाहः पद्मगर्भितोत्सर्गस्य प्रवृत्त्याभावात् किंतु द्वितीयाद्यहोरात्र एव । मातृमरणनिमित्तपक्षिणी तु द्वितीयाद्यहोरात्रे सहगमनेऽपि प्रवर्तते एव । यत्तु पृथ्वीचंद्रोदये लघुहारीतवचनं २०

"यदा नारी विशेदग्निं भर्तुश्च प्रियवांछया। तदाऽऽशौचं विधातव्यं भर्तुः शौचक्रमेण हि॥"

षडशीत्यामपि

"मृते पतिमनुव्रज्य पत्नी चेदनलं गता। न तत्र पक्षिणी कार्या पैतृकादेव शुद्ध्यतीति॥"

तत्सर्वनिबंधाकारैरलिखनादनाकरं । इयं च पक्षिणी दशमरात्रिपर्यंतं मातृमरणे । ऊर्ध्वं तु त्र्यहसमुच्चिता सा अंत्ययामे तु त्र्यहसमुच्चिता । समुच्चयस्तूभयस्या त्र्यहत्र्यहसंख्यया पक्षिण्याः प्रसंग- २५ सिद्धिरूप एव । मातृविषये विशेषविशिष्टत्वेऽपि पक्षिण्या रात्रिशेषेऽन्यत्रापि च प्रवृत्त्या सामान्यरूपस्यापि सत्वात्र पक्षिणीबाधकत्वमिति नैकस्य प्रवृत्तिर्नियमेनेति ।

एवं तत्र पितृमरणेऽपि दशाहमेव संपूर्णं न त्र्यहादिति । अत एव तत्रान्यस्य मरणे त्र्यहो मातृमरणे पक्षिणीती नानौचित्यं मृताशौचांतरे मातृमृतौ तु पक्षिणी तुर्यपादार्थं ।

अशौचान्त्यरात्रौ तद्रात्र्यंत्ययामे वाशौचांतरपाते विशेषमाह शातातपः ३०

"रात्रिशेषे द्व्यहाच्छुद्धिर्यामशेषे शुचिस्त्र्यहादिति"। यत्तु केचित् । "त्रिरात्रमाप्रत्तादेशाद्दशाहं शावमाशौचं" इत्यादावाशौचषट्के रात्र्यहःशब्दयोरहोरात्रे परिभाषणात्

---

१ द प्रत्ययोगत। २ क-पूर्वजाते। ३ ख-द।

आशौचांत्यदिनेऽप्याशौचांतरपाते व्यहवृद्धिमाहुः । तन्न । "रात्रिशेष" इत्यत्र लक्षणायां मानाभावात् । परिभाषणं तु त्रिरात्रदशाहादिपरं । अन्यथा दशाहविधिना रात्रावाशौचाभावेन पंचयज्ञाद्यनुष्ठानापत्त्या "संध्यां पंचमहायज्ञान्नैत्यकं स्मृतिकर्म च" इत्यादि संध्यादिपर्युदासवचसो बाधप्रसंगात् । "दशाहं शावमाशौचम्" इत्यादिसमानार्थकानां "दशरात्रमतःपरम्" इत्यादीनां प्रायशो दर्शनाच्च । तेन परिभाषणमपि न्यायमूलकं । "रात्रिशेषे द्व्यहात्" इत्यादौ तु न्यायाभावान्निर्मूलमेव स्यात् ।

यच्च "पुन पाते दशाहात्प्राक् पूर्वेण सह गच्छति । दशमेऽह्नि यतेयस्याहद्वयात्स विशुद्ध्यति ॥ "प्रभाते [1] त्रिरात्रेण दशरात्रेष्वयं विधिरिति" देवलवचनम् । यच्चाहःशेषे द्वाभ्यां प्रभाते तिसृभिरिति "शंखलिखितवचनम् तद्दशमेऽह्नि शेषे चातीत इति व्याख्येयम् । "अथ यदि दशरात्राः सन्निपातेयु.-पुराद्यं दशरात्रमादिवसादत ऊर्ध्वं त्रिरात्रेण व्युष्टाया त्रिरात्रेणेति" बौधायनवचनं तु द्वितीयस्या नवमाद्दिवसादिति व्याख्येयम् । एवं च रात्रिमात्रावशिष्ट इति मिताक्षराग्रंथेऽपि लक्षणामन्तरेण संगच्छत इत्यन्ये । वस्तुतस्तु अभ्याहारादहोरात्रलक्षणैव ज्यायसीति दिक् । यत्र रात्रिशेषे यामशेषे वा द्व्यहाशौचपातस्तत्र शेषशुद्धिविधिप्रवृत्तेः तदपवादकद्व्यहत्र्यहाभ्यामेव शुद्धिः । पक्षिण्येकाहयोस्तत्र सन्निपाते तु पूर्वशेषेणैव शुद्धिः । तथा सति 'रात्रिशेष' इत्यादि "पूपा प्रविष्टा" न्यायेन लाघवाद्व्यहत्र्यहयोः प्रतिप्रसवो भवत्यन्यथा पूर्वविधिः स्यात् । तथाहि । यत्र रात्रिशेषे दशाहपातस्तत्र व्यहत्र्यहयोः प्रसक्तत्वात्तयोः प्रतिप्रसवो युक्त एव । शौचपातेऽपि शेषाहोरात्रं गृहीत्वा व्यहे व्यहस्य प्रसक्तत्वात्तत्रापि प्रतिप्रसवो युक्त एव । एवं यामशेषेऽपि । येषां तु "यस्याहस्तस्य शर्वरीति" पक्षस्तेषां सवहोरात्रं गृहीत्वैव त्र्यहप्राप्ते व्यहमेवाधिक प्राप्तं न त्र्यहमिति न तत्र प्रभाते तिसृभिरिति प्रतिप्रसवः संभवतीति । एवं पक्षिण्येकाहादीनां तत्र पाते व्यहत्र्यहप्राप्तेः प्रतिप्रसवविध्यसंभवात्पूर्वविधिरेव स्यादिति ।

"कश्चित्तु रात्रिशेषे वा त्र्यहाशौचपाते देवलबौधायनादिवचने दशाहादिपदबलाद्व्यहत्र्यहयोर्दशाहविषयत्वप्रतीते रात्रिशेषे त्र्यहपाते पूर्वशेषेणैव शुद्धिरित्याह । तत्तुच्छम् । दशमशब्दस्य द्वादशाद्याशौचसंग्रहार्थे संपूर्णाशौचरूपाहोरात्रोपलक्षणपरत्वस्यावश्यमङ्गीकार्यत्वेन लाघवाद्याशौचासहोर्थे रात्रमात्रोपलक्षणत्वस्यैव युक्तत्वात् । अन्यथा "पुन पाते दशाहात्प्रागिति" देवलवाक्यपूर्वार्धे "दशरात्राः सन्निपतेयुः" इति बौधायन...वाक्ये च (?) दशरात्रस्योपलक्षणत्वानापत्त्या त्रिरात्रादिषु त्रिरात्रादिप्राप्ते पूर्वशेषेण शुद्धिर्न स्यादिति । अत्र वर्द्धितव्यहत्र्यहाशौचे...तदधिकाशौचांतरपाते तूत्तरेणैव शुद्धिर्न पूर्वेण तस्य अल्पत्वात् ।

अत्र सर्वत्रापि पूर्वप्रवृत्ताशौचशेष एवोत्तराशौचशुद्ध्यापादको न तु ज्ञाततत्तज्ज्ञानं वा पूर्वाशौचशेषेण शुद्धिस्तु सूतिकाग्नितद्भिन्नसपिंडानां "सूतिकामग्निदं हित्वा पूर्वशेषेण शुद्ध्यन्तीति" स्मृतेः ॥

---

१ एतच्चिन्हांतर्गतं ल पुस्तके एव पठ्यते । २ वद-भान । ३ ल-सूतिकामग्निदाभिन्न, मद-सूतिकामिदनिक ।

## अथ समानदेशे देशान्तरे वा अतिक्रान्ताशौचनिर्णयः ।

तत्राशौचमध्ये जननमरणयोः श्रवणे तच्छेषेणैव शुद्धिः । " प्रोषिते कालशेषः स्यादिति " याज्ञवल्क्योक्तेः ( अ० २१ ) । आशौचमध्ये प्रोषितमरणश्रवणे शौचकालशेषेण शुद्धिरित्यर्थः ।

" विगतं तु विदेशस्थं शृणुयाद्यो ह्यनिर्दशं यच्छेषं दशरात्रस्य तावतैव शुचिर्भवेदिति "। ५ मनूक्तेश्च ( अ. ५-७४ )। दशाहादूर्ध्वं ज्ञाने तु वृद्धवसिष्ठः ।

"मासत्रये त्रिरात्रं स्यात् षण्मासात्पक्षिणी भवेत्। अहस्तु नवमादर्वागूर्ध्वं स्नानेन शुद्ध्यति॥"

देवलः

" आ त्रिपक्षात्रिरात्रं स्यात् षण्मासात्पक्षिणी भवेत्। परमेकाहमावर्षादूर्ध्वं स्नातो विशुध्यतीति॥ "

अनयोः संनिहितासंनिहितदेशभेदेन व्यवस्था। स्नानेनोदकदानमप्युपलक्ष्यते १०

" सर्वेषां वत्सरे पूर्णे प्रेतं दत्वोदकं शुचिरिति " याज्ञवल्क्योक्तेः

" यत्तु मानवे ( अ० ५।७५ ) " संवत्सरे व्यतीते तु स्पृष्ट्वैवापो विशुद्ध्यतीति " एवकारश्रवणं तत्कालांतव्यावृत्यर्थं । यत्तु " श्रुत्वा चोर्ध्वं दशरात्रः पक्षिणीमिति " गौतमीयं तदूर्ध्वं मासत्रयादर्वाक् ज्ञेयं ।

यदपि " ऊर्ध्वं दशाहाच्छ्रुत्वैकरात्रमिति " वासिष्ठं ( ) तदूर्ध्वं षण्मासेभ्यो यावन्न १५ वा यदपि " निर्दशं ज्ञातिमरणं श्रुत्वा पुत्रस्य जन्म च । सवासा जलमाप्लुत्य शुद्धो भवति मानवः॥ " इति मानवं ( अ. ५।७६ ) तदूर्ध्वं नवमाऽत्सेयं । अस्मादेव मानवाज्जननाशौचातिक्रमे पितुः स्नानमात्रं। सपिंडानां नास्त्येव। अत एव देवलः " नाशुद्धिः प्रसवाशौचे व्यतीतेषु दिनेष्विति "

आशौचादूर्ध्वं तु माधवीये विष्णुः २०

" अर्वाक् त्रिपक्षात्रिनिशं षण्मासाच्च दिवानिशं। अहस्तु नवमादर्वाग्देशांतरमृतेष्वपीति॥

" मासत्रये त्रिरात्रं स्यात्षण्मासात्पक्षिणी भवेत्। अहस्तु नवमादर्वागूर्ध्वं स्नानेन शुध्यति"॥

वासिष्ठं त्वेकदेशपरमिति विज्ञानेश्वरः ।

इति समानदेशे ।

प्रसवे देशांतरे मनुः ( ५।७० ) । २५

" निर्दशं ज्ञातिमरणं श्रुत्वा पुत्रस्य जन्म च। सवासा जलमाप्लुत्य शुद्धो भवति मानवः"॥ इति॥

निर्दशमतिक्रांतदशाहादिकालं पितुः स्नानमात्रविधानात्सपिंडानां सुतरां जन्माशौचं नास्तीति ग्रंथकृतः । अत एव देवलः

" नाशुद्धिः प्रसवाशौचे व्यतीतेषु दिनेष्विति " ।

देशांतरे तु माधवीये । ३०

"अर्वाक्त्रिपक्षात्रिनिशं षण्मासात्तु दिवानिशं। अहः संवत्सरादर्वाक् देशांतरमृतेष्वपि"॥ इति।

अत्र दिवाशब्देनाहर्द्वयमुच्यते ।

"आ त्रिपक्षात्त्रिरात्रं स्यात् षण्मासात्पक्षिणी भवेत्। परमेकाहमा वर्षादूर्ध्वं स्नातो विशुद्ध्यति"॥

इति देवलोक्तेति माधवः ।

तातचरणास्तु " अहः संवत्सरात् " इत्यनेन पौनरुक्त्यपातादेवाहर्द्वयमुच्यत इति। संवत्सरशब्दश्च पादोनवत्सरपरस्तेन समानदेशे नवमादर्वाक् एकाहः। देशांतरे तदूर्ध्वं स्नानमिति नानोचित्यमित्याहुः। युक्तं तु। आशौचप्रकरणे दिवानिशादिशब्दानामहोरात्रलक्षणायाः पत्नत्वान्निशाशब्द एव वर्तमानाहोरात्रलक्षकः। दिवाशब्देऽर्द्धयलक्षणा स्वाधुनिकी स्यादतो
५ दिवाशब्दो यथाश्रुत एव। न च दिवाशब्दस्यैवाहोरात्रलक्षणेति विनिगमनाविरहः शक्यः। तथा सत्यागामिवर्तमानाहर्युक्तायां निशि पक्षिणीत्येवंरूपायाः पक्षिण्या बाधकप्रसंगात्। यानि तु

"देशांतरमृतं श्रुत्वा क्लीबे वैखानसे (मृ)तौ। मृते स्नानेन शुध्यंति गर्भस्रावे तु गोत्रिणः"॥

इति स्मृतिः यच्च

"भृग्वग्निमरणे चैव देशांतरमृते तथा। बाले प्रेते च संन्यस्ते सद्यःशौचं विधीयते॥

१० "देशांतरमृतः कश्चित्सगोत्रः श्रूयते यदि। न त्रिरात्रमहोरात्रं सद्यः स्नात्वा शुचिर्भवेत्"॥ इति ( ३। १०–११ ) पराशरवाक्यद्वयं च सत्संवत्सरोर्ध्वं अवतिष्ठते। पूर्वोक्तविष्णुवाक्यैकवाक्यत्वात्। यद्वा " बाले देशांतस्थे च पृथक्पिंडे च संस्थिते। सवासा जलमाप्लुत्य सद्य एव विशुद्ध्यति॥ " इति (अ. ५,७७) मनु वाक्यैकतया आद्यः श्लोको सपिंडविषयः। अंत्यश्लोकस्तु सगोत्रमात्रपर इति। ' देशांतरस्थत्वेन वा सपिंडो विशेष्यते ' इति
१५ माधवः। मातापितृविषये पैठीनसिः

"पितरौ चेन्मृतौ स्यातां दूरस्थोऽपि हि पुत्रकः। श्रुत्वा तद्दिनमारभ्य दशाहं सूतकी भवेत्"॥

दशाहमिति स्वाशौचोपलक्षणं। स्मृत्यंतरे

"महागुरुनिपाते तु आर्द्रवस्त्रोपवासिना। अतीतेऽब्देऽपि कर्तव्यं प्रेतकर्म यथाविधीति"॥

दंपत्योः सवर्णोत्तमवर्णसपत्न्योश्च परस्परदेशांतरे कालांतरे च दशाहादिस्वजात्याशौचमेवेति
२० स्मृत्यर्थसारे। सपत्नमातृविषये दक्षः

"पितृपत्न्यामपेतायां मातृवर्जं द्विजोत्तमाः। संवत्सरे व्यतीते तु त्रिरात्रमशुचिर्भवेदिति"॥

देशांतरगतादिमृतावाशौचाभावेऽपि स्नानमात्रमस्त्येव।

"देशांतरमृतं श्रुत्वा क्लीबे वैखानसे यतौ। मृते स्नानेन शुद्ध्यंति गर्भस्रावे तु गोत्रिणः।"

इति स्मरणात्।

२५ देशांतरं च

" महानद्यंतरं यत्र गिरिर्वा व्यवधायकः। वाचो यत्र विभिद्यंते तद्देशांतरमुच्यते॥

" देशांतरं वदंत्येके षष्टियोजनमायतं। चत्वारिंशद्वदंत्यन्ये त्रिंशदन्ये तथैव चेति॥"

स्मृत्यावनेकधोक्तं। अत्र वाग्भेदः सर्वपक्षेषु समुच्चीयते।

एतच्चातिक्रांताशौचमुपनीतमरण एव। तदपि वयोवस्थाशौचवत्सर्ववर्णसाधारणं।
३० तथा च व्याघ्रपादः

" तुल्ये वयसि सर्वेषामतिक्रांते तथैव च। उपनीते तु विषमं तस्मिन्नेवातिकालजे "॥

अयमर्थः। जन्मप्रभृत्युपनयनात्पूर्वं वयसि यदाशौचम् "आ दंतजननात्सद्य" इत्यादि तत्सर्वेषां ब्राह्मणादीनां तुल्यं। यच्च दशाहादिके अतिक्रांते तदपि तुल्यं। उपनीतोपरमे तु दशाहादौ

त्यादिरूपं विषमाशौचं तस्मिन्नेवोपनीतमरण एवातिकालजमतिक्रान्ताशौचं भवति न पुनर्व-योवस्थाशौचातिक्रम इति । अत्र यद्युपनीतग्रहणेनानुपनीतपर्युदासेऽपि आचातुल ( ? ) सोद-कादिमरणेऽप्यतिक्रान्ताशौचं प्रसज्यत एव तथापि त्रिरात्रपक्षिण्यायाशौचातिक्रमेऽपकर्षस्य त्रिरात्रविधानस्यानौचित्यादतिक्रान्ते दशाहे त्रिरात्रे मनूक्तेऽस्मिन्नतिक्रान्ताशौचं संपूर्णदशा-हाद्याशौचविषयमेवेति । अत्र " मासत्रये त्रिरात्रं स्यात् " इत्यादौ मासश्चाद्त्रिंशद्दि- ५ नात्मक एव । तेनांतरा मलमासपाते तमादायैव गणनेति ज्ञेयं । युक्ततरं श्राद्धमयूखे द्रष्टव्यमिति दिक् ।

## अथ सोदकाशौचं ।

मनुः ( ५, ६२ )

" दशाहं शावमाशौचं सपिंडेषु विधीयते । जननेऽप्येवमेव स्यान्निपुणां शुद्धिमिच्छता ॥ १०

" जन्मन्येकोदकानां तु त्रिरात्राच्छुद्धिरिष्यते ॥ " ( ५, ७० )

एकोदकाः सोदकाः । इदं च त्रिरात्रं संपूर्णप्रसवे उपनीतमरणे च ज्ञेयं ।

"दशाहेन सपिंडास्तु शुध्यन्ति प्रेतसूतके । त्रिरात्रेण सकुल्यास्तु स्नात्वा शुध्यन्ति गोत्रजाः ॥

" त्रिरात्रं दशरात्रं वा शावमाशौचमिष्यते ॥ " इत्यादिवाक्येषु दशरात्रतुल्यकक्षतया त्रिरात्रस्योक्तत्वात् । तेनासंपूर्णप्रसवे अनुपेतमरणे च सोदकानां स्नानमेव । एवमेव मातुलबंधु- १५ त्रयादीनां चोपनीतानामेव पक्षिण्याद्याशौचं । अन्यथा दंतजननादेः पूर्वं सोदके मातुलादेर्मृतौ त्रिरात्रपक्षिण्यादि तादृशस्य भ्रात्रादेः स न इत्यनौचित्यं स्यात् । सोदकानाह मनुः (अ ५।६०)

" सपिंडता तु पुरुषे सप्तमे विनिवर्तते । समानोदकभावस्तु जन्मनाम्नोरवेदने ॥ " अत्रापि विनिवर्तत इत्यनुषजनीयं । गोत्रजेष्वेकरात्रस्यापि मनुनोक्तत्वात्सप्तमादूर्ध्वं चतुर्दश- पुरुषपर्यंतं सोदकास्ततः ऊर्ध्वं गोत्रजा इति स्थितं । २०

तथोपाध्यायादिमृताशौचं । त्र्यहमित्यनुवृत्तौ याज्ञवल्क्यः ( प्रा २४ )

" गुर्वंतेवास्यनूचानमातुलश्रोत्रियेषु च " । गुरुरुपाध्यायः । अंतेवासी शिष्यः । अनूचानो-ऽध्यापकः । एकाचार्योपनीते समानग्रामवासिनि श्रोत्रिये चाश्वलायनः ( ४।२६, ३७ ) " एकाहसब्रह्मचारिणि समानग्रामीये च श्रोत्रिये " इति । आचार्योपरमे मनुः । ( ५।७९ )॥

"त्रिरात्रमाहुराशौचमाचार्ये संस्थिते सति । तस्य पुत्रे च पत्न्यां च दिवारात्रमिति स्थितिः ॥" २५

बृहस्पतिः " त्र्यहं मातामहाचार्यश्रोत्रियेष्वशुचिर्भवेत् । " तथा

" पित्रोरुपरमे स्त्रीणामूढानां तु कथं भवेत् । त्रिरात्रेणैव शुद्धिः स्यादित्याह भगवान्यमः ॥

"श्वशुरयोर्भगिन्यां च मातुलान्यां च मातुले । पित्रोः स्वसरि तद्वच्च पक्षिणीं क्षपयेन्निशां"॥

तथा

" मातुले श्वशुरे मित्रे गुरौ गुर्वंगनासु च । आशौचं पक्षिणीं रात्रिं मृता मातामही यदि ॥ " ३०

चकाराद्बांधवेष्विति प्रथक्कृतं । तेऽपि आत्मनः पितृष्वसुर्मातृष्वसुर्मातुलस्य च पुत्रा आत्मबांधवाः ।

---

१ ख-पाठ । २ फयक पाठ, इधवदधल अद हि । ३ ख-श्व । ४ ख-रात्र । ५ ख-च ।

पितुः पितृष्वसुर्मातुलस्य च पुत्राः पितृबांधवाः । मातुः पितृष्वसुर्मातुलस्य च पुत्रा मातृबांधवा इति त्रिविधाः । वृद्धमनुः

"संस्थिते पक्षिणीं रात्रिं दौहित्रे भगिनीसुते । संस्कृते तु त्रिरात्रं स्यादिति धर्मो व्यवस्थितः"इति विदेशस्थभगिन्यादिषु वृद्धवसिष्ठः ।

५ " भगिन्यां संस्कृतायां च भ्रातर्यपि च संस्कृते । मित्रे जामातरि प्रेते दौहित्रे भगिनीसुते ॥

" शालके तत्सुते चैव सद्यः स्नानेन शुद्ध्यति " ॥ अत्र भ्रात्रपेक्षया भगिन्यास्तदपेक्षयैव भ्रातुः सद्यः स्नानेन शुद्धिः जामातृशालकतत्सुतानां तु सद्यः शुद्ध्यभिधानं समानदेशेऽपि । तथा शिष्यतत्पतिश्रोत्रियकुलपतिग्रामेश्वराणां सन्निहितानां दिवामृतौ नक्षत्रदर्शनाच्छुद्धिः । रात्रौ चेत्सूर्यदर्शनात् । यावद्ग्राममध्ये शवस्तिष्ठति तावद्ग्रामस्याशौचं निर्हृते

१० शुद्धिरेव । नगरे स्वस्ववीथ्यायामाशौचं ज्ञेयं । अत्रैकविषये उच्चावचा आशौचकल्पा गुणवद्गुणवत्त्वादिना व्यवस्थाप्याः । ते च " वृत्तस्वाध्यायसापेक्षमघसंकोचनं तथा " इत्यादिना कलौ प्रतिषिद्धाः । कलिवर्ज्यविचारश्च समयमयूखे द्रष्टव्यः ।

## अथाशौचापवादः ।

कौर्मे

१५ "नैष्ठिकानां वनस्थानां यतीनां ब्रह्मचारिणां । नाशौचं कीर्तितं सद्भिः पतिते च तथा मृते" । इति आशौचे सकलकर्माधिकारनिवृत्तौ केचन धर्माः प्रतिप्रसूयंते । तत्र वैयाघ्रपादः

" स्मार्तकर्मपरित्यागो राहोरन्यत्र सूतके । श्रौते कर्मणि तत्कालं स्नातः शुद्धिमवाप्नुयात्॥ "

श्रौत इत्यग्नित्रयसाध्यावश्यकानां नित्यनैमित्तिकानां अग्निहोत्रदर्शपूर्णमासादीनां पर्युदासः । नित्यानि निवर्त्तेरन् । " वैतानवर्जं शालाग्नौ चैकं " इति पैठीनसिवचनाद्गृह्याग्निसाध्यानां

२० अर्थावश्यकानां वैकल्पिकः पर्युदासः । जातूकर्ण्योऽपि

" सूतके तु समुत्पन्ने स्मार्तकर्म कथं भवेत् । पिंडयज्ञं चरुं होममसगोत्रेण कारयेत् ॥ "

पिंडयज्ञः पिंडपितृयज्ञः । चरुः पार्वणस्थालीपाकः । श्रवणाकर्माश्वयुज्यादिकर्म । होमो नित्यः । स्मार्ते द्रव्यत्यागमात्रं स्वयं कार्यं । अन्यत्त्वसगोत्रेण कारयेत् । श्रौतेऽप्येवमिति [1]मिताक्षरायां । सर्वं कर्म स्वयं कार्यमिति तु बहवः । तत्रापि श्रौतस्मार्त्तहोमः शुष्कान्नफलादिनैव

२५ कर्तव्यो दुग्धादिना त्वसगोत्रेणैव कारयितव्य इति केचित् । अत एव ।

" सूतके च प्रवासे च अशक्तौ श्राद्धभोजने । एवमादिनिमित्तेषु हावयेन्न तु हापयेत् " ॥

इत्युक्तं यत्तु"दानं प्रतिग्रहो होमः स्वाध्यायश्च निवर्तत ।" इति तत्काम्यहोमपरं । वैश्वदेवपरं । तथा

" शिवविष्ण्वर्चनं दीक्षा यस्य त्वग्निपरिग्रहः । स तत्कर्माणि कुर्वीत स्नातः शुद्धिमवाप्नुयात् ॥"

जाबालिः"अर्च्यीता मानसी संध्या प्रणायामविवर्जिता" इति ।"अंजलिप्रक्षेपस्तु सावित्रीमुच्चार्य

३० कार्यं " इति पैठीनसिनोक्तं । तथा " सूतके मृतके उभयत्र कुलस्यान्नं दशाहानि न भुज्यते " इति यमोक्तेरसपिंडैराशौच्यन्नं न भोक्तव्यं । यद्यनापदि तदीयमन्नं भक्षयति तदा तावदाशौचभाक् यावत्तेषामिति । [2]आपदि तु " यावदन्नं समश्नाति तावदहान्यशुचिः

1 ल-पाठः । 2 यवल-व्याघ्रपादः; द-तत्रैव व्याघ्रपादः । 3 ल-प्या ।

स्यात्ततः प्रायश्चित्तं चरेदिति ॥" अशौच्यन्नभोजनदोषश्च दातृभोक्त्रन्यतरस्याशौचज्ञान एव । तथा षट्त्रिंशन्मते

"उभाभ्यामपरिज्ञाने सूतकं नैव दोषकृत् । एकेनापि परिज्ञाते भोक्तुर्दोषमुपावहेत् ॥"

तथा

"विवाहोत्सवयज्ञेषु अंतरा मृतसूतके । परैरन्नं प्रदातव्यं दातृन् भोक्तृंश्च न स्पृशेदिति ॥" ५

परैरसगोत्रैः । तथा विवाहादिष्वेव पूर्वसंकल्पितेऽपि न दोषः । तथा च बृहस्पतिः

"विवाहोत्सवयज्ञेषु त्वंतरा मृतसूतके । पूर्वसंकल्पितान्नेषु न दोषः परिकीर्तितः ॥" इति । तथा

"भुंजानेषु तु विप्रेषु अंतरा मृतसूतके । अन्यगेहोदकाचांताः शुद्ध्यंति ह्यसगोत्रिणः" ॥ इति ।

मरीचिः

"लवणे मधुमांसे च पुष्पमूलफलेषु च । शाककाष्ठतृणेष्वप्सु दधिसर्पिःपयस्सु च ॥ १०

"तिलौषधाजिने चैव पक्वापक्वे स्वयं ग्रहः । पण्येषु चैव सर्वेषु नाशौचं मृतसूतके ॥" इति । पक्वं भक्ष्यं । अपक्वं तंडुलादि । स्वयं ग्रहः स्वयमेव स्वाम्यनुज्ञात उपादद्यादित्यर्थः । पक्वापक्वपर्युदासो अन्नसत्रप्रवृत्तादेव नान्यस्मात् । तथा चांगिराः

"अन्नसत्रप्रवृत्तानामाममन्नमगर्हितं । भुक्त्वा पक्वान्नमेतेषां त्रिरात्रं तु पयः पिबेत् ॥"

अत्र पक्वशब्द ओदनपरः । तथा १५

"व्रतयज्ञविवाहेषु श्राद्धे होमार्चने जपे । प्रारब्धे सूतकं न स्यादनारब्धे तु सूतकं ॥"

सूतकमिति मृतकस्याप्युपलक्षणम् । प्रारंभश्च

"प्रारंभो वरणं यज्ञे संकल्पो व्रतसत्रयोः । नांदीमुखं विवाहादौ श्राद्धे पाकपरिक्रियेति ॥"

नांदीश्राद्धावधिश्च । स्मृत्यंतरेऽपि

"एकविंशत्यहर्यज्ञे विवाहे दश वासराः । अहानि त्रीण्युपनये श्राद्धे पाकपरिक्रियेति ॥" २०

आशौचसंभावनायां एकविंशत्यादिदिनमध्ये प्रधानेनानेकदिनव्यवहितमपि नांदीश्राद्धं कार्यमिति प्रयोगरत्ने पितामहचरणाः । प्रचेताः

"कारवः शिल्पिनो वैद्या दासी दासास्तथैव च । राजानो राजभृत्याश्च सद्यःशौचाः प्रकीर्तिताः" ॥ इति ।

सद्यः शौचं शिल्पिवैद्यानन्यसाध्यकर्मण्येव । न तु पंचयज्ञादाविति मिताक्षरायां । तथा सूतकादौ नित्यस्नानशौचाचमनबलिदानप्राणाहुतिपात्रकरणादयो भुंजिनियमा अस्पृश्यस्पर्शन- २५ स्नानादिकं चेति सर्वं कर्तव्यमेवेति स्मृत्यर्थसारे । नित्यस्नानमंगतर्पणसहितमेव कार्यं ।

"अस्पृश्यस्पर्शने वांते अश्रुपाते क्षुरे भगे । स्नानं नैमित्तं कार्यं देवपित्र्यविवर्जितं ॥

"उद्धृतैरुदकैः स्नायान्न कुर्याद्वस्त्रपीडनमिति" । नैमित्तिकस्नान एव तर्पणाद्यंगपर्युदासात् । पितृमरणोत्तरं प्रथमाब्दे विशेषमाह देवलः

"स्नानं चैव महादानं स्वाध्यायं चाग्नितर्पणं । प्रथमेऽब्दे न कुर्वीत महागुरुनिपातने ॥" ३०

---

१ ल–परिज्ञाते । २ ल–अन्यत्र । होदश । ३ ल–स्या । ४ ल–श्र । ५ ल–विद् चौलोपनयने नांदीश्राद्धं विधियत इति । ६ ल–यौचाश्र । ७ ल–भुजि । ८ ल–चांति । ९ ल–त्यै ।

स्नानं समावर्त्तनं काम्यस्नानं वा । महादानसाहचर्येण विशेषविधायदर्शनादिति न्यायात् । ( जैमिनि सू० २।३।१६ ) स्वाध्यायः काम्यः । ब्रह्मयज्ञाध्ययनं वा । अग्नितर्पणं काम्यो होमः ।

देवलः

"प्रमीतौ पितरौ यस्य देहस्तस्याशुचिर्भवेत् । न दैवं नापि वा पित्र्यं यावत्पूर्णो न वत्सरः" ॥ इति ।

५ दैवं स्नानादि । पित्र्यं गयाऽपरपक्षनिमित्तमेकोद्दिष्टं पार्वणं च पित्रातिरिक्तस्य । अत एव त्रिस्थलीसेतौ

"अस्थिक्षेपं गयाश्राद्धं श्राद्धं चापरपाक्षिकं । प्रथमेऽब्दे न कुर्वीत कृते पितृसपिंडने ॥" यदि स्यात्सपिंडनमिति क्वचित्पाठः । तथा

"दर्शश्राद्धं गयाश्राद्धं श्राद्धं चापरपाक्षिकं । प्रथमेऽब्देऽपि कुर्वीत यदि स्याद्भक्तिमान्सुतः" ॥ इति ।

१० भक्तिमान् महत्याख्यश्राद्धवान् । तत्कृत्वा तानि कुर्यादिति केचित् । तत्र मूलं चिंत्यम् । सुत इत्येव निमित्तं समर्पकं । भक्तिमत्त्वे तु कर्मांगत्वेन प्राप्तत्वादनूद्यते । अतः सुतेनाद्याब्दे कार्यं नान्येन इति तु युक्तं । तथा

"सर्वेषां प्रेत कार्याणां महागुरुनिपातने । कुर्यात्संवत्सरादर्वाक् श्राद्धमेकं तु वर्जयेत् ॥"

भृगुः

१५ "माता चैव तथा भ्राता भार्या पुत्रस्तथा स्नुषा । एषां मृतौ चरेच्छ्राद्धमन्यस्या न पुनः पितुः ॥"

तथा

"माता चैव सुतो भ्राता पत्नी चैव विपद्यते । तत्र श्राद्धानि कुर्वीत न कुर्याज्जनके मृते ॥"

माता गौणी न जननी । तन्मरणोत्तरं प्रमीतौ पितराविति देवलीयेन दैवपित्र्ययोर्निषेधात् । एतत्पूर्णसांवत्सरिकपरमिति केचित् । तत्रापि मूलं मृग्यं । अत्र पितरि मृतेऽन्यदीयं

२० श्राद्धं न कुर्यादिति निषिध्यते । अन्यमृतौ कुर्यादिति तु नित्यत्वं सामान्यवाक्यप्राप्तमेवानूद्यत इति दिक् ॥

इतिश्रीमीमांसकशंकरभट्टात्मजभट्टनीलकंठकृते भास्करे

शुद्धिमयूखः समाप्तः ॥

---

१ ल-च । २ ह्य-प । ३ कल-पक्षिक । ४ हदधअफ-र्धकं । ५ अदधयइलयल । ६ ह्य-पाठ्य । ७ हइ-पुस्तकयोरेते सूचीपत्राणि दत्तानि; अग्रकघदधनयफयल पुस्तकेषु तु न ।

घ-इति श्रीसेंगरवंशावतंसमहाराजाधिराजश्रीभगवन्तदेवादिष्टश्रीमद्नारायणसूरिसूनुशङ्करसूरिशिरोरत्न-मीमांसकशंकरभट्टात्मजनीलकंठेनरचिते भगवन्तभास्करे शुद्धिमयूखः समाप्तः ॥ शुभम—

क-शके १७०४ शुभकृन्नामसंवत्सरे भाद्रपद शु॥ ५ पुस्तकं समाप्तः ।

फ-चर्मण्वतीतरणिजाशुभसंगमस्य । सान्निध्यभाजिहतशालिनि मध्यदेशे ॥

ख्याता भरेहनगरी किल तत्र राजा । राजीवलोचनरतो भगवन्तदेवः ॥

इति श्रीसेंगरवंशावतंसश्रीभगवंतदेवोदितमीमांसकभट्टशंकरभट्टात्मजभट्टनीलकंठ कृ ( ते ) भगवन्त भास्करे शुद्धिविधानमयूख. समाप्त ॥ शुभमस्तु । श्री ।

# एतत्पुस्तकोद्धृतवचनाना

## सूची।

## [ २ ] एतद्ग्रन्थोद्धृतन्यायाः



---